अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति, इति वा। तस्मै ते नम इत्येव।

**४०८। न चवाहाहैवयुक्ते ८।१।२४।** चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां मां च रक्षतु। कथं त्वां मां वा न रक्षेत्, इत्यादि। युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः। परम्परासम्बन्धे त्वादेशः स्यादेव, हरो हरिश्च मे स्वामी।

**४०९। पश्यार्थैश्चानालोचने ८।१।२५।** अचाक्षुषज्ञानार्थधातुभिर्योगे एते आदेशा न स्युः। चेतसा त्वां समीक्षते। परम्परासम्बन्धेऽप्ययं निषेधः। भक्तस्तव रूपं ध्यायति। आलोचने तु—भक्तस्त्वा पश्यति चक्षुषा।

**४१०। सपूर्वायाः प्रथमाया विभाषा ८।१।२६।** विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः। **भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्'**। त्वा मा इति वा।

**४११। साऽऽमन्त्रितम् २।३।४८।** सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्।

**४१२। आमन्त्रितं पूर्वमविद्यमानवत् ८।१।७२।** स्पष्टम्। अग्ने तव। देवास्मान्पाहि। अग्ने नय। अग्न इन्द्र वरुण। इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न। 'सर्वदा रक्ष देव नः' इत्यत्र तु 'देव' इत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं 'रक्ष' इत्येतदाश्रित्यादेशः। एवम् 'इमं मे गङ्गे यमुने' इति मन्त्रे यमुन इत्यादिभ्यः प्राचीनामंत्रिताविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः

**४१३। नामन्त्रिते समानाधिकरणे सामान्यवचनम् ८।१।७३।** विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत्स्यात्। हरे

दयालो नः पाहि । अग्ने तेजस्विन् ।

४१४ । **विभाषितं विशेषवचने** ८।१।७४। अत्र भाष्यम् 'बहुवचनमिति वक्ष्यामि' इति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा । यूयं प्रभवो देवाः शरण्याः, युष्मान्भजे, वो भजे । इहान्वादेशेऽपि वैकल्पिका आदेशाः । सुपात्-सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ ।

४१५ । **पादः पत्** ६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्याम्, इत्यादि । **इति दान्ताः ।**

## अथ थकारान्तप्रकरणम् ।

अग्निं मन्थतीत्यग्निमत्-अग्निमद् । अग्निमथौ । अग्निमथः । अग्निमद्भ्याम्, इत्यादि । **इति थान्ताः ।**

## अथ चकारान्तप्रकरणम् ।

'ऋत्विग्—' ( सू. ३७३ ) इत्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन् ।

४१६ । **अनिदितां हल उपधायाः क्ङिति** ६।४।२४। हलन्तानामनिदितानामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च । 'उगिदचाम्—'(सू. ३६१) इति नुम् । 'संयोगान्तस्य लोपः' (सू.५४) नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' (सू. ३७७) इति कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ ।

४१७ । **अचः** ६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ।

४१८ । **चौ** ६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्याम्, इत्यादि । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । 'अचः' (सू. ४१७) इति लोपस्य विष-

येऽन्तरङ्गोऽपि यण् न प्रवर्तते 'अकृतव्यूहाः'-(प. ५७) इति परिभाषया। प्रतीचः। प्रतीचा। 'अमुमञ्चति' इति विग्रहे 'अदस्-अञ्च्' इति स्थिते।

**४१९। विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ६।३।९२।** अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्ते अञ्चतौ परे। 'अदद्रि अञ्च्' इति स्थिते यण्।

**४२०। अदसोऽसेर्दादु दो मः ८।२।८०।** अदसोऽसान्तस्य दात्परस्य उदूतौ स्तौ दस्य मश्च। 'उ' इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः। आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः। अमुमुयङ्। अमुमुयञ्चौ। अमुमुयञ्चः। अमुमुयञ्चम्। अमुमुयञ्चौ। अमुमुईचः। अमुमुईचा। अमुमुयग्भ्याम्, इत्यादि। मुत्वस्यासिद्धत्वान्न यण्। **'अन्त्यबाधेऽन्त्यसदेशस्य'** (प. १०४) इति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते 'अदमुयङ्'। 'अः सेः सकारस्य स्थाने यस्य सः असिः' इति व्याख्यानात् 'त्यदाद्यत्वविषय एव मुत्वं नान्यत्र' इति पक्षे अदद्र्यङ्। उक्तं च—भाष्ये—

'अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥' इति।

'विष्वग्देवयोः' किम्? अश्वाची। 'अञ्चतौ' किम्? विष्वग्युक्। 'अप्रत्यये' किम्? विष्वगञ्चनम्। अप्रत्ययग्रहणं ज्ञापयति—'अन्यत्र धातुग्रहणे तदादिविधिः' इति। तेन 'अयस्कारः'। 'अतः कृकमि-' (सू. १६९) इति सः। उदङ्। उदञ्चौ। उदञ्चः। शसादावचि—

**४२१। उद ईत् ६।४।१३९।** उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात्। उदीचः। उदीचा। उदग्भ्याम्, इत्यादि।

**४२२। समः समि ६।३।९३।** अप्रत्ययान्तेऽञ्चतौ परे समः समि-

रादेशः स्यात् । सम्यङ् । सम्यञ्चौ । सम्यञ्चः । समीचः । समीचा ।

४२३ । सहस्य सध्रिः ६।३।९५। अप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् ।

४२४ । तिरसस्तिर्यलोपे ६।३।९४। अलुप्ताकारेऽञ्चतावप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यञ्चम् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम्, इत्यादि ।

४२५ । नाञ्चेः पूजायाम् ६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । प्राङ् । प्राञ्चौ । प्राञ्चः । नलोपाभावादकारलोपो न । प्राञ्चः । प्राञ्चा । प्राङ्भ्याम् । प्राङ्खु-प्राङ्क्षु-प्राङ्षु । एवं पूजार्थे प्रत्यङादयः । 'क्रुञ्च कौटिल्याल्पीभावयोः' । अस्य 'ऋत्विग्–' (सू. ३७३) आदिना नलोपाभावोऽपि निपात्यते । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्याम् । इत्यादि । 'चोः कुः' (सू. ३७८) । पयोमुक्-पयोमुग् । पयोमुचौ । पयोमुचः । 'व्रश्च—' (सू. २९४) इति षत्वम् । 'स्कोः–' (सू. ३८०) इति सलोपः । जश्त्वचर्त्वे । सुवृट्-सुवृड् । सुवृश्चौ । सुवृश्चः । सुवृट्त्सु-सुवृट्सु । इति चान्ताः ।

## अथ तकारान्तप्रकरणम् ।

'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' (उ. २४१) एते निपात्यन्ते, शतृवच्चैषां कार्यं स्यात् । उगित्त्वान्नुम् । 'सान्तमहतः–' ( सू. ३१७) इति दीर्घः । मह्यते पूज्यत इति महान् । महान्तौ । महान्तः । हे महन् । महतः । महता । महद्भ्याम्, इत्यादि ।

४२६ । अत्वसन्तस्य चाधातोः ६।४।१४। अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे । परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः । ततो नुम् । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । धातोरप्यत्वन्तस्य दीर्घः ।

गोमन्तमिच्छति, गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप्। 'उगिदचाम्-' (सू. ३६१) इति सूत्रेऽञ्ग्रहणं नियमार्थम्- 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति। तेन 'स्रत्' 'ध्वत्' इत्यादौ न। 'अधातोः' इति त्वधातुभूतपूर्वस्यापि नुमर्थम्। गोमान्। गोमन्तौ। गोमन्तः, इत्यादि। 'भातेर्डवतुः' (उ. ६३) भवान्। भवन्तौ। भवन्तः। शत्रन्तस्य त्ववत्वन्तत्वाभावान्न दीर्घः। भवतीति भवन्।

**४२७। उभे अभ्यस्तम् ६।१।५।** षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः।

**४२८। नाभ्यस्ताच्छतुः ७।१।७८।** अभ्यस्तात्परस्य शतुर्नुम् न स्यात्। ददत्-ददद्। ददतौ। ददतः।

**४२९। जक्षित्यादयः षट् ६।१।६।** षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्-जक्षद्। जक्षतौ। जक्षतः। एवं जाग्रत्, दरिद्रत्, शासत्, चकासत्। दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद् व्यत्ययेन परस्मैपदम्। दीध्यत्। वेव्यत्। इति तान्ताः।

## अथ पकारान्तप्रकरणम्।

गुप्-गुब्। गुपौ। गुपः। गुब्भ्याम्, इत्यादि। इति पान्ताः।

## अथ शकारान्तप्रकरणम्।

**४३०। त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०।** त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेर्धातोः कञ् स्यात्, चात् क्विन्।

**४३१। आ सर्वनाम्नः ६।३।९१।** सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्दृशवतुषु। कुत्वस्यासिद्धत्वात् 'व्रश्च—' (सू. २९४) इति षः। तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वेन पक्षे कः, तादृक्-तादृग्। तादृशौ। तादृशः। 'षत्वापवादत्वात्कुत्वेन खकारः' इति कैयटः

हरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयेत, न तु गः, जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । 'दिगादिभ्यो यत्' ( सू. १४२९ ) इति निर्देशा-न्नासिद्धत्वमिति वा बोध्यम् । 'व्रश्च'-( सू. २९४ ) इति षत्वम्, जश्त्वचर्त्वे । विट्-विड् । विशौ । विशः । विशम् ।

**४३२ । नशेर्वा ८।२।६३।** नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते । नक्-नग् । नट्-नड् । नशौ । नशः । नग्भ्याम्-नड्भ्याम्, इत्यादि ।

**४३३ । स्पृशोऽनुदके क्विन् ३।२।५८।** अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतस्पृक्-घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्क्विप्यपि कुत्वम् । स्पृक् । षडगकाः प्राग्वत् । **इति शान्ताः ।**

## अथ षकारान्तप्रकरणम् ।

'ञिधृषा प्रागल्भ्ये' । अस्मात् 'ऋत्विग्—' (सू. ३७३) आदिना क्विन् द्वित्वमन्तोदात्तत्वं च निपात्यते । कुत्वापूर्वं जश्त्वेन डः गः कः । धृष्णोतीति दधृक्-दधृग् । दधृषौ । दधृषः । दधृग्भ्याम्, इत्यादि । रत्नानि मुष्णातीति रत्नमुट्-रत्नमुड् । रत्नमुषौ । रत्नमुषः । 'षड्भ्यो लुक्' ( सू. २६१ ) । षट्-षड् । षड्भिः । षड्भ्यः २ । 'षट्चतुर्भ्यश्च' ( सू. ३३८ ) इति नुट् । 'अनाम्' इति पर्युदासान्न ष्टुत्वनिषेधः । 'यरोऽनुनासिके –' ( सू. ११६ ) इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' ( वा. २७ ) इति वचनान्नित्यमनु-नासिकः । षण्णाम् । षट्त्सु-षट्सु । तदन्तविधिः, परमषट् । परम-षण्णाम् । गौणत्वे तु प्रियषषः । प्रियषषाम् । रुत्वं प्रति षत्वस्या-सिद्धत्वात् 'ससजुषो रुः' ( सू. १६२ ) इति रुत्वम् ।

**४३४ । र्वोरुपधाया दीर्घ इकः ८।२।७६।** रेफवान्तस्य धातो-

रुपधाया इको दीर्घः स्यात्पदान्ते। पिपठीः। पिपठिषौ। पिपठिषः। पिपठीर्भ्याम्। 'वा शरि' (सू. १५१) इति वा विसर्जनीयः।

४३५। **नुम्विसर्जनीयशर्व्यवायेऽपि** ८।३।५८। एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। ष्टुत्वेन पूर्वस्य षत्वम्। पिपठीष्षु पिपठीःषु। 'प्रत्येकम्' इति व्याख्यानादनेकव्यवधाने षत्वं न। निंस्स्व। निंस्से। नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं, व्याख्यानात्। तेनेह न—सुहिन्सु, पुंसु। अत एव न शर्ग्रहणेन गतार्थता। 'रात्सस्य' (सू. २८०) इति सलोपे विसर्गः, चिकीः। चिकीर्षौ। चिकीर्षः। 'रोः सुपि' (सू. ३३९) इति नियमान्न विसर्गः, चिकीर्षु। **'दमेर्डोस्'** (उ. २२७)। डित्त्वसामर्थ्याट्टिलोपः। षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ, दोः। दोषौ। दोषः। 'पद्दन्—' (सू. २२८) इति वा दोषन्। दोष्णः। दोष्णा। दोषः। दोषा। 'विश प्रवेशने'। सन्नन्तात्क्विप्। (१) षत्वस्यासिद्धत्वात्संयोगान्तलोपः। 'व्रश्च—' (२९४) इति षः। जश्त्वचर्त्वे। विविट् विविड्। विविक्षौ। विविक्षः। 'स्कोः—' (सू. ३८०) इति कलोपः। तट्-तड्। तक्षौ। तक्षः। गोरट्-गोरड्। गोरक्षौ। गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु 'स्कोः—' (सू. ३८०) इति न प्रवर्तते, णिलोपस्य स्थानिवद्भावात्। 'पूर्वत्रासिद्धे न स्थानिवत्' (वा ४४) इति त्विह नास्ति, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' (वा. ४५) इति निषेधात्। तस्मात् संयोगान्तलोप एव। तक्-तग्। गोरक्-गोरग्। 'स्कोः—' (सू. ३८०) इति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगान्तलोपः। पिपक्-पिपग्। एवं विवक्, दिधक्। **इति षान्ताः।**

---

(१) **'कुत्वस्याऽसिद्धत्वात्'** इति पाठः।

## अथ सकारान्तप्रकरणम् ।

'पिस गतौ' सुष्ठु पेसतीति सुपीः । सुपिसौ । सुपिसः । सुपिसा । सुपीर्भ्याम् । सुपीःषु-सुपीष्षु । एवं सुतूः । 'तुस खण्डने' । विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसम् । विद्वांसौ ।

४३६ । **वसोः सम्प्रसारणम्** ६।४।१३१। वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । पूर्वरूपत्वं षत्वम् । विदुषः । विदुषा । 'वसुस्रंसु-' (सू. ३३४) इति दत्वम् । विद्वद्भ्याम् । इत्यादि । सेदिवान् । सेदिवांसौ । सेदिवांसः । सेदिवांसम् । अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते । 'अकृतव्यूहाः-' (प. ५७) इति परिभाषया । सेदुषः । सेदुषा । सेदिवद्भ्याम् । इत्यादि । 'सान्तमहतः-' (सू. ३१७) इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, न तु धातोः, महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन् । सुहिंसौ । सुहिंसः । सुहिन्भ्याम् । सुहिन्सु । ध्वत्-ध्वद् । ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्रत् ।

४३७ । **पुंसोऽसुङ्** ७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । उकार उच्चारणार्थः । 'बहुपुंसी' इत्यत्र 'उगितश्च' (सू. ४५५) इति ङीबर्थं कृतेन 'पुञो डुम्सुन्' (पातेर्डुम्सुन्) इति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुंसः । पुंसा । पुम्भ्याम् । पुम्भिः । पुंसु । 'ऋदुशन-' (सू. २७६) इत्यनङ् । उशना । उशनसौ । उशनसः । ॐ६५ **अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः**ॐ । हे उशनन्-हे उशन-हे उशनः । उशनोभ्याम् । इत्यादि । अनेहा । अनेहसौ । अनेहसः । हे अनेहः । अनेहोभ्याम् । इत्यादि । वेधाः । वेधसौ । वेधसः । हे वेधः । वेधोभ्याम् इत्यादि । अधातोरित्युक्तेर्न दीर्घः । सुष्ठु वस्ते सुवः ।

सुवसौ । सुवसः । पिण्डं ग्रसते पिण्डग्रः । पिण्डग्लः । 'ग्रसु ग्लसु अदने' ।

**४३८ । अदस औ सुलोपश्च ७।२।१०७।** अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । 'तदोः सः सौ–' (सू. ३८१) इति दस्य सः । असौ । **॥ ६३ । आत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च ॥** । प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ–असुकः । त्यदाद्यत्वं, पररूपत्वम् , वृद्धिः । 'अदसोऽसेः–' (सू. ४२०) इति मत्वोत्त्वे, अमू । 'जसः शी' (सू. २१४) आद्गुणः (सू. ६९) ।

**४३९ । एत ईद्बहुवचने ८।२।८१।** अदसो दात्परस्य एत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ । अमी । 'पूर्वत्रासिद्धम्' (सू. १२) इति विभक्तिकार्यं प्राक् , पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ।

**४४० । न मु ने ८।२।३।** नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना । अमुभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु । **इति सान्ताः ।** इति हलन्तपुँल्लिङ्गप्रकरणम् ।

---

## अथ हलन्तस्त्रीलिङ्गे हकारान्तप्रकरणम् ।

**४४१ । नहो धः ८।२।३४।** नहो हस्य धः स्याज्झलि पदान्ते च । उपानत्–उपानद् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । उत्पूर्वात् 'ष्णिह प्रीतौ' ( धा. १२०१ ) इत्यस्मात् 'ऋत्विग्–' (सू. ३७३ ) आदिना क्विन् , निपातनाद्दलोपषत्वे । क्विन्नन्तत्वात्कुत्वेन हस्य घः, जश्त्वचर्त्वे; उष्णिक् उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु । **इति हान्ताः ।**

## अथ वकारान्तप्रकरणम्।

द्यौः। दिवौ। दिवः। द्युभ्याम्। द्युषु। **इति वान्ताः।**

## अथ रेफान्तप्रकरणम्।

गीः। गिरौ। गिरः। एवं पूः। चतुरश्चतसृादेशः। चतस्रः २। चतसृणाम्। **इति रेफान्ताः।**

## अथ मकारान्तप्रकरणम्।

किमः कादेशे टाप्। का। के। काः। सर्वावत्।

**४४२। यः सौ ७।२।११०।** इदमो दस्य यः स्यात्सौ। 'इदमो मः' (सू. ३४३)। इयम्। त्यदाद्यत्वं, टाप् 'दश्च' (सू. ३४५) इति मः, इमे। इमाः। इमाम्। इमे। इमाः। अनया। 'हलि लोपः' (सू. ३४७)। आभ्याम् ३। आभिः। अस्य। अस्याः २। अनयोः २। आसाम्। अस्याम्। आसु। अन्वादेशे तु—एनाम्। एने। एनाः। एनया, एनयोः २। **इति मान्ताः।**

## अथ जकारान्तप्रकरणम्।

'ऋत्विग्–' (सू. ३७३) आदिना सृजेः क्विन् अमागमश्च निपातितः। स्रक्-स्रग्। स्रजौ। स्रजः। स्रक्षु। **इति जान्ताः।**

## अथ दकारान्तप्रकरणम्।

त्यदाद्यत्वं टाप्। स्या। त्ये। त्याः। एवं तद्, यद्, एतद्। **इति दान्ताः।**

## अथ चकारान्तप्रकरणम्।

वाक्-वाग्। वाचौ। वाचः। वाग्भ्याम्। वाक्षु। **इति चान्ताः।**

## अथ पकारान्तप्रकरणम् ।

अप्शब्दो नित्यं बहुवचनान्तः । 'अप्तृन्–' ( सू. २७७ ) इति दीर्घः, आपः । अपः ।

**४४३ । अपो भि ७।४।४८।** अपस्तकारः स्याद्भादौ प्रत्यये परे अद्भिः । अद्भ्यः २ । अपाम् । अप्सु । **इति पान्ताः ।**

## अथ शकारान्तप्रकरणम् ।

दिक्-दिग् । दिशौ । दिशः । दिग्भ्याम् । दिक्षु । 'त्यदादिषु—' ( सू. ३४० ) इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्-दृग् । दृशौ । दृशः । **इति शान्ताः ।**

## अथ षकारान्तप्रकरणम् ।

त्विट्-त्विड् । त्विषौ । त्विषः । त्विड्भ्याम् । त्विट्त्सु-त्विट्सु । सह जुषत इति सजूः । सजुषौ । सजुषः । सजूर्भ्याम् । सजूष्षु-सजूःषु । षत्वस्यासिद्धत्वाद्रुत्वम् , आशीः । आशिषौ । आशिषः । आशीर्भ्याम् । **इति षान्ताः ।**

## अथ सकारान्तप्रकरणम् ।

असौ । त्यदाद्यत्वं, टाप् , औङः शी, उत्त्वमत्वे, अमू । अमूः । अमूम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः २ । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु । **इति सान्ताः ।**

इति हलन्तस्त्रीलिङ्गप्रकरणम् ।

---

## अथ हलन्तनपुंसकलिङ्गे हकारान्तप्रकरणम् ।

स्वमोर्लुक् , दत्वम् , स्वनडुत्-स्वनडुद् । स्वनडुही । 'चतुरन-

डुहोः–' (सू. ३३१) इत्याम् , स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । इति हान्ताः ।

## अथ वकारान्तप्रकरणम् ।

'दिव उत्' ( सू. ३३७ ) अहर्विमलद्यु । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम् , **॥६७ उत्तरपदत्वे चापदादिविधौ प्रतिषेधः॥** । इति प्रत्ययलक्षणं न, विमलदिवी । 'अपदादिविधौ' किम् ? दधिसेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । कुत्वे तु न । इति वान्ताः ।

## अथ रेफान्तमान्तप्रकरणम् ।

वाः । वारी । अझलन्तत्वान्न नुम्, वारि । चत्वारि । इति रेफान्ताः ।

'न लुमता—' (सू. २६३) इति कादेशो न, किम् । के । कानि । इदम् । इमे । इमानि । **॥६८ अन्वादेशे नपुंसके एनद्वक्तव्यः॥** । एनत् । एने । एनानि । एनेन । एनयोः २ । इति मान्ताः ।

## अथ नकारान्तप्रकरणम् ।

ब्रह्म । ब्रह्मणी । ब्रह्माणि । हे (१) ब्रह्मन्–हे ब्रह्म । 'रोऽसुपि' (सू. १७२)अहर्भाति । 'विभाषा ङिश्योः' (सू. २३७)अह्नी-अहनी । अहानि ।

**४४४ । अहन् ८।२।६८** । 'अहन्' इत्यस्य रुः स्यात्पदान्ते । अहोभ्याम् । अहोभिः । इह 'अहः' 'अहोभ्याम्' इत्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते 'अहन्' इत्यावर्त्य (२) नलोपाभावं निपात्य, द्वितीयेन रुर्विधेयः । तदन्तस्यापि रत्वरुत्वे । दीर्घाण्यहानि यस्मिन् स 'दीर्घाहाः'

(१) सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः ।
(२) प्रथमेन इत्यादि ।

निदाघः। इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'असुपि' इति निषेधाद्रुत्वाभावे रुः, तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः। सम्बुद्धौ तु हे 'दीर्घाहः' निदाघ। दीर्घाहानौ। दीर्घाहानः। दीर्घाह्णा। दीर्घाहोभ्याम्। दण्डि। दण्डिनी। दण्डीनि। स्रग्वि। स्रग्विणी। स्रग्वीणि। वाग्मि। वाग्मिनी। वाग्मीनि। (१) बहुवृत्रहाणि। (२) बहुपूषाणि। (३) बह्वर्यमाणि। **इति नान्ताः।**

## अथ जकारान्तप्रकरणम्।

असृजः पदान्ते कुत्वम्, सृजेः क्विनो विधानात्। विश्वसृडादौ तु न, 'सृजिदृशोः' (सू.२४०५) इति सूत्रे 'रज्जुसृड्भ्याम्' इति (४) भाष्यप्रयोगात्। यद्वा 'व्रश्च–' (सू. २०४) आदिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः। स्रगृत्विक्छब्दयोस्तु निपातनादेव कुत्वम्। असृक्छब्दस्तु अस्यतेरौणादिके ऋच्प्रत्यये बोध्यः। असृक्-असृग्। असृजी। असृजि। 'पद्दन्' (सू. २२८) इति वा असन्। असानि। असृजा-अस्ना। असृग्भ्याम्-असभ्याम्। इत्यादि। ऊर्क्, ऊर्ग्। ऊर्जी। ऊर्न्जि। नरजानां संयोगः। **॥६९ बहूर्जि नुम्प्रतिषेधः॥। ॥७० अन्त्यात्पूर्वो वा नुम्॥।** बहूर्जि-बहूंर्जि वा कुलानि। **इति जान्ताः।**

## अथ दकारान्तप्रकरणम्।

त्यत्-त्यद्। त्ये। त्यानि। तत्-तद्। ते। तानि। यत्-यद्। ये। यानि। एतत्-एतद्। एते। एतानि। अन्वादेशे तु एनत्। वेभिद्यतेः

---

**(१) बहुवृत्रह, बहुवृत्रघ्नी बहुवृत्रहणी।**
**(२) बहुपूष, बहुपूष्णी बहुपूषणी। (३) बह्वर्यम, बह्वर्यम्णी बह्वर्यमणी।**
**(४) अनव्ययपूर्वपदे कुत्वाभावः, अव्ययपूर्वपदे कुत्वमिति कल्पनात्**

क्विप्, बेभित्-बेभिद्। बेभिदी। शावल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुम्। अजन्तलक्षणस्तु नुम् न, स्वविधौ स्थानिवत्त्वाभावात्, बेभिदि ब्राह्मणकुलानि चेच्छिदि। इति दान्ताः।

## अथ चकारान्तप्रकरणम्।

**'गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः। असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतम्मतम्॥ १॥ स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः। चत्वारि शेषे दशके रूपाणीति विभावय'॥ २॥**

अथाहि, गामञ्चतीति विग्रहे 'ऋत्विग्—' (सू. ३७३) आदिना क्विन्, गतौ नलोपः, 'अवङ् स्फोटायनस्य' (सू. ८८) इत्यवङ्, गवाक्-गवाग्। 'सर्वत्र विभाषा-' (सू. ८७) इति प्रकृतिभावे, गोअक्-गोअग्-पूर्वरूपे गोऽक्-गोऽग्। पूजायां नस्य कुत्वेन ङः, गवाङ्-गोअङ्-गोऽङ्। अम्यप्येतान्येव नव। औङः शी, भत्वात्। 'अचः' (सू. ४१७) इत्यलोपः, गोची। पूजायान्तु गवाञ्ची-गोअञ्ची गोऽञ्ची। 'जश्शसोः शिः' (सू. ३१२), शेस्सर्वनामस्थानत्वान्नुम्, गवाञ्चि-गोअञ्चि-गोऽञ्चि। गतिपूजनयोस्त्रीण्येव गोचा, गवाञ्चा-गोअञ्चा-गोऽञ्चा। गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम्। इत्यादि। सुपि तु ङान्तानां पक्षे 'ङ्णोः कुक्-' (सू. १३०) इति कुक्, गवाङ्क्षु-गोऽङ्क्षु, गोअङ्क्षु, गवाङ्षु-गोअङ्षु-गोऽङ्षु, गवाक्षु-गोअक्षु। गोऽक्षु। न चेह 'चयो द्वितीयाः' (वा. ३०) इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम्, चर्त्वस्यासिद्धत्वात्। कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे चयो द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव। **'ऊह्यमेषां द्विर्वचनानुनासिकविकल्प-**

नात् । रूपाण्यष्टाविभूतानि (५२७) भवन्तीति मनीषिभिः ॥' तिर्यक् । तिरश्ची । तिर्यञ्चि । पूजायां तु तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि । इति चान्ताः ।

## अथ तकारान्तप्रकरणम् ।

यकृत् । यकृती । यकृन्ति । 'पद्दन्-' (सू. २२८) इति वा यकन्, यकानि । यक्ना–यकृता । शकृत् । शकृती। शकृन्ति। शकानि । शक्ना-शकृता । ददत् । ददती ।

४४५ । **वा नपुंसकस्य** ७।१।७९। अभ्यस्तात्परो यः शता तदन्तस्य क्लीवस्य नुम् वा स्यात्सर्वनामस्थाने परे । ददन्ति-ददति। तुदत् ।

४४६ । **आच्छीनद्योर्नुम्** ७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः । तुदन्ती—तुदती । तुदन्ति । भात् । भान्ती–भाती । भान्ति । पचत् ।

४४७ । **शप्श्यनोर्नित्यम्** ७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति । इति तान्ताः ।

## अथ पकारान्तप्रकरणम् ।

स्वप्–स्वब् । स्वपी । नित्यात्परादपि नुमः प्राक् 'अप्तृन्-' (सू. २७७) इति दीर्घः, प्रतिपदोक्तत्वात् , नुम् , स्वाम्पि । 'निरवकाशत्वं प्रतिपदोक्तत्वम्' इति पक्षे तु प्रकृते तद्विरहान्नुमेव, स्वम्पि । स्वपा । 'अपो भि' ( सू. ४४३ ) स्वद्भ्याम् । स्वद्भिः । इति पान्ताः ।

## अथ सकारान्तप्रकरणम् ।

'अर्तिपृवपि-' (उ २७४) इत्यादिना धनेरुस्, रुत्वम्, धनुः । धनुषी । 'सान्त-' (सू. ३१७) इति दीर्घः 'नुम्विसर्जनीय-' (सू. ४३५)

इति षत्वम्, धनूंषि । धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पिपठिषतेः क्विप्, 'र्वोः—' ( सू. ४३३ ) इति दीर्घः, पिपठीः । पिपठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न, स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न, पिपठिषि । पिपठीर्भ्याम् । इत्यादि । पयः । पयसी । पयांसि । पयसा । पयोभ्याम् । इत्यादि । सुपुम् । सुपुंसी । सुपुमांसि । अदः विभक्तिकार्यम्, उत्वमत्वे, अमू । अमूनि । शेषं पुंवत् । **इति सान्ताः ।**

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।

## अथाव्ययप्रकरणम् ।

४४८ । **स्वरादिनिपातमव्ययम्** ।१।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैर् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत्, क्षत्रियवत् । सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशाम् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ।

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् ।

भूयस्। कूपत्। सूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। किञ्चित्। यत्र। नह। हन्त। माकिः। माकिम्। नकिः। (आकिम्) नकिम्। माङ्। नञ्। यावत्। तावत्। त्वै। द्वै। न्वै। रै। श्रौषट्। वौषट्। स्वाहा। स्वधा। ओम्। तुम्। तथाहि। खलु। किल। अथो। अथ। सुष्ठु। स्म। आदह। **'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (ग)**-अवदत्तम्। अहंयुः। अस्तिक्षीरा। अ। आ। इ। ई। उ। ऊ। ए। ऐ। ओ। औ। पशु। शुकम्। यथाकथाच। पाट्। प्याट्। अङ्ग। है। हे। भोः। अये। द्य। विषु। एकपदे। युत्। आतः। चादिरप्याकृतिगणः॥ **इति चादयः।**

४४९। **तद्धितश्चासर्वविभक्तिः १।१।३८।** यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात्। परिगणनं कर्तव्यम्-'तसिलादयः प्राक्पाशपः, शस्प्रभृतयः प्राक्समासान्तेभ्यः, अम्, आम्, कृत्वोऽर्थाः, तसिवती, नानाञौ' इति। तेनेह न-पचतिकल्पम्। पचतिरूपम्।

४५०। **कृन्मेजन्तः १।१।३९।** कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्। स्मारंस्मारम्। जीवसे। पिबध्यै।

४५१। **क्त्वातोसुन्कसुनः १।१।४०।** एतदन्तमव्ययं स्यात्। कृत्वा। उदेतोः। विसृपः।

४५२। **अव्ययीभावश्च १।१।४१।** अधिहरि।

४५३। **अव्ययादाप्सुपः २।४।८२।** अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात्। तत्र शालायाम्। विहितविशेषणान्नेह-अत्युच्चैसौ। अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति, तथापि न गौणे। आब्ग्रहणं व्यर्थम्, अलिङ्गत्वात्। **'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्'** (भाष्योक्ता) **इति श्रुतिलिङ्ग-**

कारकसङ्ख्याऽभावपरा । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥' वगाहः-अवगाहः । पिधानम्-अपिधानम् । इत्यव्ययप्रकरणम् ।

## अथ स्त्रीप्रत्ययप्रकरणम् ।

४५४ । **स्त्रियाम् ४।१।३।** अधिकारोऽयम् समर्थानामिति यावत् ।

४५५ । **अजाद्यतष्टाप् ४।१।४।** अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजाद्युक्तिर्ङीषो ङीपश्च बोधनाय । अजा । अतः खट्वा । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी (१) अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अजा । एडका । अश्वा । चटका । मूषिका । एषु जातिलक्षणो ङीप् प्राप्तः । बाला । वत्सा । होडा । मन्दा । विलाता । एषु 'वयसि प्रथमे' (सू. ४७९) इति ङीप् प्राप्तः । ❀७१ **सम्भस्त्राऽजिनशणपिण्डेभ्यः फलात्**❀ । सम्फला । भस्त्रफला । 'ङ्यापोः—' (सू. १००३) इति ह्रस्वः । ❀ ७२ **सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्** ❀ । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । ❀ ७३ **शूद्रा चामहत्पूर्वा जातिः**❀ । पुंयोगे तु शूद्री । 'अमहत्पूर्वा' किम ? महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । **'मध्यमेति पुंयोगेऽपि' (ग)** । **'कोकिला जातावपि' (ग)** । ❀ ७४ मूलान्नञः ❀ अमूला । 'ऋन्नेभ्यो ङीप्' (३०६) कर्त्री । दण्डिनी ।

४५६ । **उगितश्च ४।१।६।** उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप् स्यात् । भवन्ती । पचन्ती । दीव्यन्ती । 'शप्श्यनोः—' (सू. ४७७)

---

(१) 'द्विगोः' इति ङीप् ।

इति नुम्। 'उगिदचाम्–' (सू. ३६१) इति सूत्रेऽञ्चग्रहणेन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति नियम्यते। तेनेह न—उखास्रत्। क्विप्, 'अनिदिताम्–' (सू. ४१६) इति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव। प्राची। प्रतीची।

४५७। **वनो र च ४।१।७।** वन्नन्तात्तदन्ताच्च प्रातिपदिकास्त्रियां ङीप्स्यात्, रश्चान्तादेशः। वन्निति ङ्वनिप्क्वनिब्वनिपां सामान्यग्रहणम्। **'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' (प. २४)।** तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता अतिसुत्वरी। अतिधीवरी शर्वरी। **ॐ७५ वनो न हश इति वक्तव्यम्ॐ।** हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीप् रश्च नेत्यर्थः। 'ओणृ अपनयने'। वनिप् 'विड्वनोः–' (सू. २९८२) इत्यात्वम्। अवावा ब्राह्मणी। राजयुध्वा। **ॐ७६ बहुव्रीहौ वाॐ।** बहुधीवरी–बहुधीवा। पक्षे डाब्वक्ष्यते।

४५८। **पादोऽन्यतरस्याम् ४।१।८।** पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकान्ङीब्वा स्यात्। द्विपदी–द्विपाद्।

४५९। **टाबृचि ४।१।९।** ऋचि वाच्यायां पादन्ताट्टाप् स्यात्। द्विपदा ऋक्। एकपदा। 'न षट्स्वस्रादिभ्यः' (सू. ३९८) पञ्च। चतस्रः। 'पञ्च' इत्यत्र नलोपे कृतेऽपि 'ष्णान्ता षट्' (सू. ३६९) इति षट्संज्ञां प्रति 'नलोपः सुप्स्वर—' (सू. ३५३) इति नलोपस्यासिद्धत्वात् 'न षट्स्वस्रादिभ्यः' (सू. ३०८) इति न टाप्।

४६०। **मनः ४।१।११।** मन्नन्तान्न ङीप्। सीमा। सीमानौ।

४६१। **अनो बहुव्रीहेः ४।१।१२।** अन्नन्ताद्बहुव्रीहेर्न ङीप्। बहुयज्वा। बहुयज्वानौ।

**४६२ । डाबुभाभ्यामन्यतरस्याम् ४।१।१३।** सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात् । सीमा । सीमे-सीमानौ । दामा । दामे-दामानौ । 'न पुंसि दाम' इत्यमरः । बहुयज्वा । बहुयज्वे-बहुयज्वानौ ।

**४६३ । अन उपधालोपिनोऽन्यतरस्याम् ४।१।२८।** अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात् । पक्षे डाब्निषेधौ (१) बहुराज्ञी । बहुराज्ञ्यौ—बहुराजे—बहुराजानौ ।

**४६४ । प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७।३।४४।** प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे, स आप्सुपः परो न चेत् । सर्विका । कारिका । 'अतः' किम् ? नौका । 'प्रत्ययस्थात्' किम् ? शक्नोतीति शका । 'असुपः' किम् ? बहुपरिव्राजका नगरी । 'कात्' किम् ? नन्दना । 'पूर्वस्य' किम् ? परस्य मा भूत्, कटुका । 'तपरः' किम् ? राका । 'आपि' किम् ? कारकः । **॥७७ मामकनरकयोरुपसङ्ख्यानम्॥** । मामिका । नरान्कायतीति नरिका । **॥७८ त्यक्त्यपोश्च॥** । दाक्षिणात्यिका । इहत्यिका ।

**४६५ । न यासयोः ७।३।४५।** यत्तदोरस्येन्न स्यात् । यका । सका । यकाम् । तकाम् । **॥७९ त्यकनश्च निषेधः॥** । अधित्यका । उपत्यका । **॥८० आशिषि वुनश्च न॥** । जीवका । भवका । **॥८१ उत्तरपदलोपे न॥** । देवदत्तिका-देवका । **॥८२ क्षिपकादीनां च॥** । क्षिपका । ध्रुवका । कन्यका । चटका । **॥८३ तारका ज्योतिषि॥** । अन्यत्र तारिका । **॥८४ वर्णका तान्तवे॥** । अन्यत्र वर्णिका । **॥८५ वर्तका शकुनौ प्राचाम्॥** । उदीचां तु वर्तिका । **॥८६ अष्टका पितृदेवत्ये॥** । अष्टिका अन्या । **॥८७ सूतकापुत्रिकावृन्दारकाणां**

(१) डाब्निषेधपक्षयोः—बहुराजा ।

**वेति वक्तव्यम्**॥। इह वा अ इति च्छेदः। कात्पूर्वस्याकारादेशो वेत्यर्थः। तेन पुत्रिकाशब्दे ङीन ईवर्णस्य पक्षेऽकारः। अन्यत्रेत्त्वबाधनार्थमकारस्यैव पक्षेऽकारः। सूतका-सूतिका। इत्यादि।

**४६६। उदीचामातः स्थाने यकपूर्वायाः ७।३।४६।** यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे। 'केऽणः' (सू. ८३५) इति ह्रस्वः, आर्यका-आर्यिका। चटकका-चटकिका। 'आतः' किम्? साङ्काश्ये भवा साङ्काश्यिका। 'यक' इति किम्? अश्विका। 'स्त्रीप्रत्यय—' इति किम्? शुभं यातीति शुभंयाः अज्ञाता शुभंयाः शुभंयिका। ॥८८ **धात्वन्तयकोस्तु नित्यम्**॥। सुनयिका। सुपाकिका।

**४६७। भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ७।३।४७।** स्वेत्यन्तं लुप्तषष्ठीकं पदम्। एषामत इद्वा स्यात्। तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम्। भस्त्राग्रहणमुपसर्जनार्थम्। अन्यस्य तूत्तरसूत्रेण सिद्धम्। 'एषा' 'द्वा' एतयोस्तु सपूर्वयोर्नेत्त्वम्, अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'असुपः' इति प्रतिषेधात्। अनेषका। परमैषका। अद्वके। परमद्वके। स्वशब्दग्रहणं संज्ञोपसर्जनार्थम्। इह हि 'आतः स्थाने' इत्यनुवृत्तम् स्वशब्दस्यातो विशेषणम्, न तु द्वैषयोरसम्भवात्। नाप्यन्येषाम्, अव्यभिचारात्। स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। संज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्युदाहरणम्। एवं चात्मीयायां 'स्विका' 'परमस्विका' इति नित्यमेवेत्त्वम्। निर्भस्त्रका-निर्भस्त्रिका। एपका-एषिका। कृतषत्वनिर्देशान्नेह विकल्पः-एतिके। एतिकाः। अजका-अजिका। ज्ञका-ज्ञिका। द्वके-द्विके। निःस्वका-निःस्विका।

४६८। **अभाषितपुंस्काच्च** ७।३।४८। **एतस्माद्विहितस्य** आतः स्थाने अत इद्वा स्यात्। गङ्गका—गङ्गिका। बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम्। अज्ञाता अखट्वा—अखट्विका। **शैषिके** कपि तु विकल्प एव।

४६९। **आदाचार्याणाम्** ७।३।४९। पूर्वसूत्रविषये आद्वा **स्यात्**। गङ्गाका। उक्तपुंस्कात्तु शुभ्रिका।

४७०। **अनुपसर्जनात्** ४।१।१४। अधिकारोऽयं 'यूनस्तिः' (सू. ५३२) इत्यभिव्याप्य। अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति।

४७१। **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ४।१।१५। अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात्। कुरुचरी। उपसर्जनत्वान्नेह - बहुकुरुचरा। नदट्—नदी। 'वक्ष्यमाणा' इत्यत्र टित्त्वादुगित्त्वाच्च ङीप्प्राप्तो यासुटो ङित्त्वेन **'अनाश्रयमनुबन्धकार्यं नादेशानाम्'** (प. ७०) इति ज्ञापनान्न भवति, श्नः शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी। **'ताच्छीलिके णेऽपि'** (प० ६८) चौरी। ॐ८९ **नञ्स्नञीकक्ख्युस्तरुणतलुनानामुपसङ्ख्यानम्**ॐ। स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी। तलुनी।

४७२। **यञश्च** ४।१।१६। यञन्तात्स्त्रियां ङीप्स्यात्। अकारलोपे कृते।

४७३। **हलस्तद्धितस्य** ६।४।१५०। हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे। गार्गी। ॐ९० **अनपत्याधिका**-

**रस्थाच्च ङीप्**॥ । द्वीपे भवा द्वैप्या । अधिकारग्रहणान्नेह—देवस्यापत्यं दैव्या । '**देवाद्यञञौ**' ( वा० २९५ ) इति हि यञ् प्राग्दीव्यतीयः, न त्वपत्याधिकारपठितः ।

४७४ । **प्राचां ष्फ तद्धितः** ४।१।१७। यञन्तात्ष्फो वा स्यात्स्त्रियाम् , स च तद्धितः ।

४७५ । **षः प्रत्ययस्य** १।३।६। प्रत्ययस्यादिः ष इत्स्यात् ।

४७६ । **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ७।१।२। प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः । तद्धितान्तत्वात्प्रातिपदिकत्वम् । पित्त्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे 'षिद्गौरा–' ( सू. ४९९ ) इति वक्ष्यमाणो ङीप् , गार्ग्यायणी ।

४७७ । **सर्वत्र लोहितादिकतन्तेभ्यः** ४।१।१८। लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लौहित्यायनी । कात्यायनी ।

४७८ । **कौरव्यमाण्डूकाभ्यां च** ४।१।१९। आभ्यां ष्फः स्यात् । टाब्ङीपोरपवादः । 'कुर्वादिभ्यो ण्यः' ( सू. ११७७ ) कौरव्यायणी । 'ढक् च मण्डूकात्' ( सू. ११२४ ) इत्यण् । माण्डूकायनी । ॥९१ **आसुरेरुपसङ्ख्यानम्**॥ । आसुरायणी ।

४७९ । **वयसि प्रथमे** ४।१।२०। प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप्स्यात् । कुमारी । ॥९२ **वयस्यचरम इति वाच्यम्**॥ । वधूटी । चिरण्टी । वधूटचिरण्टशब्दौ यौवनवाचिनौ । 'अतः' किम् ? शिशुः । कन्याया न, 'कन्यायाः कनीन च' ( सू. ११२१ ) इति निर्देशात् ।

४८० । **द्विगोः** ४।१।२१। अदन्ताद् द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात् त्रिफला । त्र्यनीका सेना ।

**४८१ । अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ४।१।२२।** अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीब्न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । 'अध्यर्ध-' (सू. १६९३) इति लुक् । द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणान्तात्तु द्व्याढकी । 'तद्धितलुकि' किम् ? समाहारे पञ्चाश्वी ।

**४८२ । काण्डान्तात्क्षेत्रे ४।१।२३।** क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः । 'प्रमाणे द्वयसच् -' ( सू. १८३८ ) इति विहितस्य मात्रचः **'प्रमाणे लः'** ( वा० ४५२ ) **'द्विगोर्नित्यम्'** ( वा० ४५३ ) इति लुक् । 'क्षेत्रे' किम् ? द्विकाण्डी रज्जुः ।

**४८३ । पुरुषात्प्रमाणेऽन्यतरस्याम् ४।१।२४।** प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी-द्विपुरुषा वा परिखा ।

**४८४ । ऊधसोऽनङ् ५।४।१३१।** ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात्स्त्रियाम् । इत्यनङि कृते डाब्ङीब्निषेधेषु प्राप्तेषु ।

**४८५ । बहुव्रीहेरूधसो ङीष् ४।१।२५।** ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात्स्त्रियाम् । कुण्डोध्नी । 'स्त्रियाम्' किम् ? कुण्डोधो धैनुकम् । इहानङपि न, तद्विधौ 'स्त्रियाम्' इत्युपसंख्यानात् ।

**४८६ । संख्याव्ययादेर्ङीप् ४।१।२६।** ङीषोऽपवादः । द्व्यूध्नी । अत्यूध्नी । बहुव्रीहेरित्येव, ऊधोऽतिक्रान्ता अत्यूधाः ।

**४८७ । दामहायनान्ताच्च ४।१।२७।** संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप्स्यात् । दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम् । द्विदाम्नी । अव्ययग्रहणाननुवृत्तेः 'उद्दामा वडवा'

इत्यत्र डाब्निषेधावपि पक्षे स्तः। द्विहायनी बाला। ॐ९३ त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्ॐ। ॐ९४ वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यतेॐ। त्रिहायणी। चतुर्हायणी। वयसोऽन्यत्र- द्विहायना, चतुर्हायना शाला।

४८८। **नित्यं संज्ञाछन्दसोः** ४।१।२९। अन्नन्ताद्बहुव्रीहेरुपधा-लोपिनो ङीप्। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण विकल्प एव। वेदे तु शतमूर्ध्नी।

४८९। **केवलमामकभागधेयपापाऽपरसमानार्यकृतसुमङ्गल-भेषजाच्च** ४।१।३०। एभ्यो नवभ्यो नित्यं ङीप्स्यात्संज्ञाछन्दसोः। 'अथो त इन्द्रः केवलीर्विशः'। मामकी। भागधेयी। पापी। अपरी। समानी आर्यकृती। सुमङ्गली। भेषजी। अन्यत्र 'केवला' इत्यादि। मामकग्रहणं नियमार्थम्, अणन्तत्वादेव सिद्धेः। तेन लोकेऽसंज्ञायां—मामिका।

४९०। **अन्तर्वत्पतिवतोर्नुक्** ४।१।३२। एतयोः स्त्रियां नुक्स्यात्। 'ऋन्नेभ्यो ङीप्' (सू. ३०६)। गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते। तत्र अन्तः अस्त्यस्यां गर्भः इति विग्रहे अन्तरशब्दस्या-धिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादप्राप्तो मतुब्निपा-त्यते। 'पतिवत्नी' इत्यत्र तु वत्वं निपात्यते। अन्तर्वत्नी। पतिवत्नी। प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां घटः। पतिमती पृथिवी।

४९१। **पत्युर्नो यज्ञसंयोगे** ४।१।३३। पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे। वसिष्ठस्य पत्नी तत्कर्तृकस्य यज्ञस्य फलभोक्त्री-त्यर्थः, दम्पत्योः सहाधिकारात्।

४९२। **विभाषा सपूर्वस्य** ४।१।३४। पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात्। गृहस्य पतिः गृहपतिः—गृहपत्नी।

'अनुपसर्जनस्य' इतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं, किं तु तदन्तस्य । तेन बहुव्रीहावपि, दृढपत्नी-दृढपतिः । वृषलपत्नी-वृषलपतिः । अथ 'वृषलस्य पत्नी' इति व्यस्ते कथमिति चेद् ? पत्नीव पत्नीत्युपचारात् । यद्वा, आचारक्विबन्तात्कर्तरि क्विप् । अस्मिंश्च पक्षे 'पत्नियौ' 'पत्नियः' इतीयङ्विषये विशेषः । 'सपूर्वस्य' किम् ? गवां पतिः स्त्री ।

४९३ । **नित्यं सपत्न्यादिषु** ४।१।३५। पूर्वविकल्पापवादः । समानस्य सभावोऽपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी ।

४९४ । **पूतक्रतोरै च** ४।१।३६। 'इयं त्रिसूत्री पुंयोग एवेष्यते' पूतक्रतोः स्त्री पूतक्रतायी ।'**यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा**'

४९५ । **वृषाकप्यग्निकुसितकुसिदानामुदात्तः** ४।१।३७। एषामुदात्त ऐ आदेशः स्यान्ङीप् च। वृषाकपेः स्त्री वृषाकपायी । 'हरविष्णू **वृषाकपी' इत्यमरः । 'वृषाकपायी श्रीगौर्योः' इति** च । अग्नायी । कुसितायी । कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः ।

४९६ । **मनो रौ वा** ४।१।३८। मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा, ताभ्यां सन्नियोगशिष्टो ङीप्च । मनोः स्त्री मनावी—मनायी—मनुः ।

४९७ । **वर्णादनुदात्तात्तोपधात्तो नः** ४।१।३९। वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप्स्यात् , तकारस्य नकारादेशश्च । एनी—एता। रोहिणी—रोहिता । **'वर्णानां तणतिनितान्तानाम्' ( फि. ३३ )** इति फिट्सूत्रेणाद्युदात्तः 'त्र्येण्या च शलल्या' इति गृह्यसूत्रम् । त्रीणि एतानि अस्या इति बहुव्रीहिः । **'अनुदात्तात्'** किम् ? श्वेता । **'घृतादीनां च' ( फि. २१ )** इत्यन्तो-

दात्तोऽयम् । अत इत्येव । शितीः स्त्री । *** १५ पिशङ्गादुपसंख्यानम् *** । पिशङ्गी-पिशङ्गा । ***९६ असितपलितयोर्न *** । असिता । पलिता । ***९७ छन्दसि क्नमेके*** । असिक्नी । पलिक्नी । अवदातशब्दस्तु न वर्णवाची, किं तु विशुद्धवाची । तेन 'अवदाता' इत्येव ।

४९८ । **अन्यतो ङीष्** ४।१।४०। तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष्स्यात् । कल्माषी । सारङ्गी । '**लघावन्ते द्वयोश्च बह्वषो गुरुः**' (फि. ४२) इति मध्योदात्तावेतौ । 'अनुदात्तान्तात्' किम् ? कृष्णा । कपिला ।

४९९ । **षिद्गौरादिभ्यश्च** ४।१।४१। षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । नर्तकी । गौरी । ***९८ आमनडुहः स्त्रियां वा*** । अनडुही-अनड्वाही । '**पिप्पल्यादयश्च**' ( ग ) आकृतिगणोऽयम् ।

५०० । **सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः** ६।४।१४९। अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः । ***९९ मत्स्यस्य ङ्याम् *** । ***१०० सूर्यागस्त्ययोश्छे च ङ्यां च*** । ***१०१ तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्*** । मत्सी । '**मातरि षिच्च**' (वा ३२८) इति षित्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष्, दंष्ट्रा ।

५०१ । **जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुकवरात् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु** ४।१।४२। एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत् । अन्या तु जानपदी । उत्सादित्वादञन्तत्वेन 'टिड्ढा'-(सू. ४७१) इति ङीप्याद्युदात्तः । कुण्डी अमत्रं चेत् । कुण्डा अन्या । 'कुडि दाहे'

'गुरोश्च हलः' (सू. ३२८०) इत्यप्रत्ययः । यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव । अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीप् विधीयते न तु नियम्यते । गोणी आवपनं चेत् । गोणा अन्या । स्थली अकृत्रिमा चेत् । स्थला अन्या । भाजी श्राणा चेत् । भाजा अन्या । नागी स्थूला चेत् । नागा अन्या । गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम् । सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् । काली वर्णश्चेत् । काला अन्या । नीली अनाच्छादनं चेत् । नीला अन्या । नील्या रक्ता शाटीत्यर्थः । 'नील्या अन्वक्तव्यः' ( वा. ३१७ ) इत्यन् । अनाच्छादनेऽपि न सर्वत्र, किन्तु **॥ १०२ नीलादोषधौ ॥** । नीली । **॥ १०३ प्राणिनि च ॥** । नीली गौः । **॥ १०४ संज्ञायां वा ॥** । नीली—नीला । कुशी अयोविकारश्चेद् । कुशा अन्या । कामुकी मैथुनेच्छा चेत् । कामुका अन्या । कबरी केशानां सन्निवेशश्चेत् । कबरा अन्या चित्रेत्यर्थः ।

५०२ । **शोणात्प्राचाम्** ४।१।४३। शोणी–शोणा ।

५०३ । **वोतो गुणवचनात्** ४।१।४४। उदन्ताद् गुणवाचिनो वा ङीष्स्यात् । मृद्वी–मृदुः । 'उतः' किम् ? शुचिः । 'गुणः' इति किम् ? आखुः । **॥ १०५ खरुसंयोगोपधान्न ॥** । खरुः पतिंवरा कन्या । पाण्डुः ।

५०४ । **बह्वादिभ्यश्च** ४।१।४५। एभ्यो वा ङीष् स्यात् । बह्वी-बहुः । **'कृदिकारादक्तिनः' (ग)** । रात्रिः–रात्री । **'सर्वतोऽक्तिन्नर्थादित्येके' (ग)** । शकटिः–शकटी । 'अक्तिन्नर्थात्' किम् ? अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धतिशब्दो गणे पठ्यते । 'हिमकाषिहतिषु च' (सू ९९४) इति पद्भावः । पद्धतिः–पद्धती ।

५०५ । **पुंयोगादाख्यायाम्** ४।१।४८। या पुमाख्या पुंयोगा-

स्त्रियां वर्तते ततो ङीष् स्यात् । गोपस्य स्त्री गोपी । ***१०५ पालकान्तान्न*** । गोपालिका । अश्वपालिका । ***१०७ सूर्याद्देवतायां चाप् वाच्यः*** । सूर्यस्य स्त्री देवता सूर्या । 'देवतायाम्' किम् ? सूरी= कुन्ती, मानुषीयम् ।

५०६ । **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४।१।४९।** एषामानुगागमः स्यान्ङीष् च । इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते । तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयम् । इन्द्राणी । ***१०८ हिमारण्ययोर्महत्त्वे*** । महद्धिमं हिमानी । महदरण्यम् अरण्यानी । ***१०९ यवाद्दोषे*** । दुष्टो यवो यवानी । ***११० यवनाल्लिप्याम्*** । यवनानां लिपिर्यवनानी । ***१११ मातुलोपाध्याययोरानुग्वा*** । मातुलानी-मातुली । उपाध्यायानी-उपाध्यायी । ***११२ या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः*** । उपाध्यायी—उपाध्याया । ***११३ आचार्यादणत्वं च*** । आचार्यस्य स्त्री आचार्यानी । पुंयोग इत्येव । आचार्या, स्वयं व्याख्यात्री । ***११४ अर्यक्षत्रियाभ्यां वा स्वार्थे*** । अर्याणी—अर्या । स्वामिनी वैश्या वेत्यर्थः । क्षत्रियाणी—क्षत्रिया । पुंयोगे तु—अर्यी । क्षत्रियी । कथं 'ब्रह्माणी' इति ? ब्रह्माणमानयति जीवयतीति 'कर्मण्यण्' ( सू. २९१३ ) ।

५०७ । **क्रीतात्करणपूर्वात् ४।१।५०।** क्रीतान्तादन्तात्करणादेः स्त्रियां ङीष्स्यात् । वस्त्रक्रीती । क्वचिन्न—धनक्रीता ।

५०८ । **क्तादल्पाख्यायाम् ४।१।५१।** करणादेः क्तान्तादन्तात्स्त्रियां ङीष्स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः ।

५०९ । **बहुव्रीहेश्चान्तोदात्तात् ४।१।५२।** बहुव्रीहेः क्तान्ता-

दन्तोदात्ताददन्तात्स्त्रियां ङीष् स्यात् । ***११५ जातिपूर्वादिति वक्तव्यम्*** । तेन बहुनञ्सुकालसुखादिपूर्वान्न । ऊरुभिन्नी । नेह—बहुक्रीता । ***११६ जातान्तान्न*** । दन्तजाता । ***११७ पाणिगृहीती भार्यायाम्*** । पाणिगृहीता अन्या ।

५१० । **अस्वाङ्गपूर्वपदाद्वा ४।१।५३** । पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती-सुरापीता । 'अन्तोदात्तात्' किम् ? वस्त्रच्छन्ना । 'अनाच्छादनात्' इत्युदात्तनिषेधः । अत एव पूर्वेणापि न ङीष् ।

५११ । **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४।** असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीष् । केशानतिक्रान्ता अतिकेशी-अतिकेशा । चन्द्रमुखी—चन्द्रमुखा । संयोगोपधात्तु—सुगुल्फा । 'उपसर्जनात्' किम् ? शिखा । स्वाङ्गं त्रिधा—(१) **'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्'** । सुस्वेदा, द्रवत्वात् । सुज्ञाना, अमूर्तत्वात् । सुमुखा शाला, अप्राणिस्थत्वात् । सुशोफा विकारजत्वात् । **अतत्स्थं तत्र दृष्टं च**-सुकेशी सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । **तेन चेत्तत्तथायुतम् ॥** सुस्तनी—सुस्तना वा प्रतिमा, प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

५१२ । **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५।** एभ्यो वा ङीष्स्यात् । आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते, पुरस्तादपवादन्यायात् । ओष्ठादीनां पञ्चानां तु 'असंयोगोपधात्' इति पर्युदासे प्राप्ते वचनं, मध्येऽपवादन्यायात् । सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः । तुङ्गनासिकी-तुङ्गनासिका, इत्यादि । नेह—सह-

---

(१) भाष्योक्तमिदम् ।

नासिका । अनासिका । अत्र वृत्तिः-'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' स्वङ्गी-स्वङ्गा । इत्यादि । एतच्चानुक्तसमुच्चयार्थेन चकारेण सङ्ग्राह्यमिति केचित् । 'भाष्याद्यनुक्तत्वादप्रमाणम्' इति प्रामाणिकाः । अत्र वार्तिकानि-*११८ पुच्छाच्च* सुपुच्छी-सुपुच्छा । *११९ कबरमणिविषशरेभ्यो नित्यम्* । कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरी इत्यादि । *१२० उपमानात्पक्षाच्च पुच्छाच्च* । नित्यमित्येव । उलूकपक्षी शाला । उलूकपुच्छी सेना ।

५१३ । **न क्रोडादिबह्वचः** ४।१।५६ क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना ।

५१४ । **सहनञ्विद्यमानपूर्वाच्च** ४।१।५७। सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका ।

५१५ । **नखमुखात्संज्ञायाम्** ४।१।५८। ङीष्न स्यात् । शूर्पणखा । गौरमुखा । 'संज्ञायाम्' किम् ? ताम्रमुखी कन्या ।

५१६ । **दिक्पूर्वपदान्ङीप्** ४।१।६०। दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीवादेशः स्यात् । प्राङ्मुखी । आद्युदात्तं पदम् ।

५१७ । **वाहः** ४।१।६१। वाहन्तात्प्रातिपदिकान्ङीष्स्यात् । ङीषेवानुवर्तते न ङीप् । 'दित्यवाट् च मे दित्यौही च मे' ।

५१८ । **सख्यशिश्वीति भाषायाम्** ४।१।६२। इतिशब्दः प्रकारे 'भाषायाम्' इत्यस्यानन्तरं द्रष्टव्यः । तेन छन्दस्यपि क्वचित् । सखी । अशिश्वी । 'आधेनवो धुनयन्तामशिश्वीः ।'

५१९ । **जातेरस्त्रीविषयादयोपधात्** ४।१।६३। जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष्स्यात् । 'आकृतिग्रहणा जातिः' अनुगतसंस्थानव्यङ्ग्येत्यर्थः । तटी । **लिङ्गानां च न सर्वभाक्**

**सकृदाख्यातनिर्ग्राह्या ।** 'असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनाऽपि सुग्रहा जातिः' इति लक्षणान्तरम् । वृषली । 'सत्यन्तम्' किम्? शुक्ला । 'सकृत्'–इत्यादि किम् ? देवदत्ता । **'गोत्रं च चरणैः सह'** अपत्यप्रत्ययान्तः शाखाध्येतृवाची चशब्दो जातिकार्यं लभत इत्यर्थः । औपगवी । कठी । बह्वृची । 'ब्राह्मणी' इत्यत्र तु शार्ङ्गरवादिपाठान्ङीना ङीष्बाध्यते । 'जातेः' किम् ? मुण्डा । अस्त्रीविषयात् किम् ? बलाका । 'अयोपधात्' किम् ? क्षत्त्रिया । **॥१२१ योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः॥** । हयी । गवयी । मुकयी । 'हलस्तद्धितस्य' (सू. ४७३ ) इति यलोपः । मनुषी । **'मत्स्यस्य ङ्याम्'** ( ९९ ) मत्सी ।

**५२० । पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ४।१।६४।** पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष्स्यात् । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते ।

**५२१ । इतो मनुष्यजातेः ४।१।६५।** ङीष्स्यात् । दाक्षी । योपधादपि । उदमेयस्यापत्यं स्त्री औदमेयी । 'मनुष्य' इति किम् ? तित्तिरिः ।

**५२२ । ऊङुतः ४।१।६६।** उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । 'कुरुनादिभ्यो ण्यः' ( सू. ११९२ ) तस्य 'स्त्रियामवन्ति–' ( सू. ११९७ ) इत्यादिना लुक् । 'अयोपधात्' किम् ? अध्वर्युः । **॥१२२ अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् ॥** । रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाबूः । कर्कन्धूः । अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वोः' (सू. ३७२०) इति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् । प्राणिजातेस्तु-कृकवाकुः । रज्ज्वादेस्तु रज्जुः । हनुः ।

५२३। **बाह्वन्तात्संज्ञायाम् ४।१।६७।** स्त्रियामूङ् स्यात्। भद्रबाहूः। संज्ञायाम् किम् ? वृत्तबाहुः।

५२४। **पङ्गोश्च ४।१।६८।** पङ्गूः। ॐ१२३ **श्वशुरस्योकाराकारलोपश्च**ॐ। चादूङ्। पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्टपरिभाषया स्वादयः। श्वश्रूः।

५२५। **ऊरूत्तरपदादौपम्ये ४।१।६९।** उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः।

५२६। **संहितशफलक्षणवामादेश्च ४।१।७०।** अनौपम्यार्थं सूत्रम्। संहितोरूः। सैव शफोरूः। शफौ = खुरौ ताविव संश्लिष्टत्वादुपचारात्। लक्षणशब्दादर्शआद्यच्। लक्षणोरूः। वामोरूः। ॐ१२४ **सहितसहाभ्यां चेति वक्तव्यम्**ॐ। हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः। सहेते इति सहौ ऊरू यस्याः सा सहोरूः। यद्वा. विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः।

५२७। **संज्ञायाम् ४।१।७२।** कद्रूकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः 'संज्ञायाम्' किम् ? कद्रुः। कमण्डलुः। अच्छन्दोऽर्थं वचनम्।

५२८। **शार्ङ्गरवाद्यञो ङीन् ४।१।७३।** शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्स्यात्। शार्ङ्गरवी। वैदी। 'जातेः' इत्यनुवृत्तेः पुंयोगे ङीषेव। **'नृनरयोर्वृद्धिश्च'** (ग) इति गणसूत्रम्। नारी।

५२९। **यङश्चाप् ४।१।७४।** यङन्तात्स्त्रियां चाप्स्यात्। 'यङ' इति ष्यङ्ष्यङोः सामान्यग्रहणम्। आम्बष्ठ्या। कारीषगन्ध्या। ॐ१२५ **षाद्यञश्चाब्वाच्यः**ॐ। पौतिमाष्या।

५३० । आवट्याच्च ४।१।७५। अस्माच्चाप्स्यात् । 'यञश्च' ( सू. ४७२ ) इति ङीपोऽपवादः । अवटशब्दो गर्गादिः । आवट्या ।

५३१ । तद्धिताः ४।१।७६। आपञ्चमसमाप्तेरधिकारोऽयम् ।

५३२ । यूनस्तिः ४।१।७७। युवन्शब्दात्तिप्रत्ययः स्यात्, स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । 'युवती' इति तु यौतेः शत्रन्तान्ङीपि बोध्यम् । इति स्त्रीप्रत्ययप्रकरणम् ।

## अथ कारकप्रकरणे प्रथमा विभक्तिः ।

५३३ । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २।३।४६। नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा, नियतलिङ्गाश्च 'प्रातिपदिकार्थमात्रे' इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य । तटः । तटी । तटम् । परिमाणमात्रे–द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । वचनं–संख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ।

५३४ । सम्बोधने च २।३।४७। इह प्रथमा स्यात् । हे राम ।

इति प्रथमा विभक्तिः ।

## अथ द्वितीया विभक्तिः ।

५३५ । कारके १।३।२३। इत्यधिकृत्य ।

५३६ । कर्तुरीप्सिततमं कर्म १।४।४९। कर्तुः क्रियया आप्तु-

मिष्टतमं कारकं कर्मसंज्ञं स्यात्। 'कर्तुः' किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषाः, न तु कर्तुः। तमब्ग्रहणं किम्? पयसा ओदनं भुङ्क्ते। 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा 'गेहं प्रविशति' इत्यत्रैव स्यात्।

५३७। **अनभिहिते २।३।१।** इत्यधिकृत्य।

५३८। **कर्मणि द्वितीया २।३।२।** अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव। अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्—हरिः सेव्यते। कृत्—लक्ष्म्या सेवितः। तद्धितः—शतेन क्रीतः शत्यः। समासः—प्राप्तः आनन्दो यं स प्राप्तानन्दः। क्वचिन्निपातेनाभिधानम्। यथा—'**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्**'। साम्प्रतमित्यस्य हि युज्यत इत्यर्थः।

५३९। **तथा युक्तं चानीप्सितम् १।४।५०।** ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। ग्रामं गच्छंस्तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते।

५४०। **अकथितं च १।४।५१।** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। '**दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्**'। 'दुह्यादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म' इति परिगणनं कर्तव्यमित्यर्थः। गां दोग्धि पयः। बलिं याचते वसुधाम्। अविनीतं विनयं याचते। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छ-

ति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते, शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति, हरति, कर्षति, वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकस्य पितरं पन्थानं पृच्छति । ॐ१२६ **अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्** ॐ । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ।

५४१ । **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ** १।४।५२। गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् । **शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥ आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः** । 'गति' इत्यादि किम् ? पाचयत्योदनं देवदत्तेन । 'अण्यन्तानाम्' किम् ? गमयति देवदत्तो यज्ञदत्तं, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः। ॐ१२७ **नीवह्योर्न** ॐ। नाययति वाहयति वा भारं भृत्येन। ॐ१२८ **नियन्तृकर्तृकस्य वहेरनिषेधः** ॐ । वाहयति रथं वाहान्सूतः । ॐ१२९ **आदिखाद्योर्न** ॐ । आदयति खादयति वा अन्नं वटुना । ॐ१३० **भक्षेरहिंसार्थस्य न** ॐ । भक्षयत्यन्नं वटुना । 'अहिंसार्थस्य' किम् ? भक्षयति बलीवर्दान्सस्यम् । ॐ१३१ **जल्पतिप्रभृतीनामुपसङ्ख्यानम्** ॐ । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः ॐ१३२ **दृशेश्च** ॐ । दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानामिति अनेन ज्ञाप्यते । तेन 'स्मरति' 'जिघ्रति' इत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन। ॐ१३३ **शब्दायतेर्न** ॐ। शब्दाययति देवदत्तेन। धात्वर्थसंगृहीत-

कर्मत्वेनाकर्मकत्वात्प्राप्तिः। येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकाः, न त्वविवक्षितकर्माणोऽपि। तेन 'मासमासयति देवदत्तम्' इत्यादौ कर्मत्वं भवत्येव। 'देवदत्तेन पाचयति' इत्यादौ तु न।

५४२। **हृक्रोरन्यतरस्याम्** १।४।५३। हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात्। हारयति कारयति वा भृत्यं—भृत्येन वा कटम्। ❀१३४ **अभिवादिदृशोरात्मनेपदे वेति वाच्यम्**❀ अभिवादयते दर्शयते देवं भक्तं भक्तेन वा।

५४३। **अधिशीङ्स्थासां कर्म** १।४।४६। अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः।

५४४। **अभिनिविशश्च** १।४।४७। अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मार्गम्। 'परिक्रयणे सम्प्रदानम्'—(सू. ५८१) इति सूत्रादिह मण्डूकप्लुत्या अन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न। पापेऽभिनिवेशः।

५४५। **उपान्वध्याङ्वसः** १।४।४८। उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति, अनुवसति, अधिवसति, आवसति वा वैकुण्ठं हरिः। ❀१३५ **अभुक्त्यर्थस्य न**❀। वने उपवसति। ❀१३६ **उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते**❀॥ उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्युपरि लोकं हरिः। अध्यधि लोकम्। अधोऽधो लोकम्। ❀१३७ **अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि**❀। अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया। निकषा लङ्काम्। हा कृष्णाभक्तम्। तस्य शोच्यत इत्यर्थः। बुभुक्षितं न प्रतिभाति किञ्चित्।

५४६। **अन्तराऽन्तरेण युक्ते** २।३।४। आभ्यां योगे द्वितीया

इत्यादि किम् ? तत्सरतुः । 'अनादेशादेः' किम् ? चकणतुः । लिटा आदेशविशेषणादिह स्यादेव—नेमिथ, सेहे । स्कुदि ९ आप्रवणे । आप्रवणम् उत्प्लवनमुद्धरणं च ।

**२२६२ । इदितो नुम्धातोः** ७।१।५८। स्कुन्दन्ते । चुस्कुन्दे । श्विदि १० श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे । वदि ११ अभिवादनस्तुत्योः । वन्दते । ववन्दे । भदि १२ कल्याणे सुखे च । भन्दते । बभन्दे । मदि १३ स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे । स्पदि १४ किञ्चिच्चलने । स्पन्दते । पस्पन्दे । क्लिदि १५ परिदेवने । 'शोके' इत्यर्थः । सकर्मकः । क्लिन्दते चैत्रम् । चिक्लिन्दे । मुद १६ हर्षे । मोदते । दद १७ दाने । ददते ।

**२२६३ । न शसददवादिगुणानाम्** ६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ न । ददते । दददाते । दददिरे । ष्वद १८ स्वर्द १९ आस्वादने । अयमनुभवे सकर्मकः । रुचावकर्मकः ।

**२२६४ । धात्वादेः षः सः** ६।१।६४। धातोरादेः षस्य सः स्यात् । सात्पदाद्योः ( सू. २१२ ) इति षत्वनिषेधः । अनुस्वदते । सस्वदे । स्वर्दते । सस्वर्दे । उर्द २० माने क्रीडायां च ।

**२२६५ । उपधायां च** ८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते । ऊर्दाञ्चक्रे । कुर्द २१ खुर्द २२ गुर्द २३ गुद २४ क्रीडायामेव । कूर्दते । चुकूर्दे । खूर्दते । गूर्दते । गोदते । जुगुदे । षूद २५ क्षरणे । सूदते । सुषूदे ।

सेक् सृप् सृ स्तृ सृज स्तॄ स्त्यान्ये दन्त्याजन्तसादयः ।
एकाचः षोपदेशाः ष्वष्क् स्विद् स्वद् स्वञ्ज स्वप स्मिङः ॥

दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि, ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् । ह्राद २६ अव्यक्ते शब्दे । ह्रादते । जह्रादे। ह्रादी २७ सुखे च । चादव्यक्ते शब्दे । ह्लादते । स्वाद २८ आस्वादने । स्वादते। पर्द २९ कुत्सिते शब्दे । गुदरवे । इत्यर्थः । पर्दते । यती ३० प्रयत्ने। यतते । येते । युतृ ३१ जुतृ ३२ भासने । योतते । युयुते । जोतते । जुजुते । विथृ ३३ वेथृ ३४ याचने । विविथे । विवेथे । श्रथि ३५ शैथिल्ये । श्रन्थते । ग्रथि ३६ कौटिल्ये । ग्रन्थते । कत्थ ३७ श्लाघायाम् । कत्थते । एधादयोऽनुदात्तेतो गताः ।

अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः । अत ३८ सातत्यगमने। अतति । 'अत आदेः' ( सू. २२४८ ), आत । आततुः । आतुः । लुङि 'आतिस्-ईत्' इति स्थिते ।

**२२६६ । इट ईटि ८।२।२८ । इटः** परस्य सस्य लोपः स्यादीटि परे । *५३६ सिज्लोप एकादेशे सिद्धो वाच्यः । आतीत् । आतिष्टाम् । आतिषुः ।

**२२६७ । वदव्रजहलन्तस्याचः ७।२।३** । वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धि स्यात्सिचि परस्मैपदेषु । इति प्राप्ते ।

**२२६८ । नेटि ७।२।४ ।** इडादौ सिचि प्रागुक्तं न स्यात् । मा भवान्-अतीत्, अतिष्टाम् , अतिषुः । चिती ३९ संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः। च्युतिर् ४० आसेचने। आसेचनमार्द्रीकरणम् । आङ् ईषदर्थेऽभिव्याप्तौ च । *५३७ इर इत्संज्ञा वाच्या* । च्योतति । चुच्योत ।

**२२६९ । इरितो वा ३।१।५७ ।** इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे । अच्युतत्-अच्योतीत् । श्च्युतिर ४१ क्षरणे । श्च्योतति ।

चुश्च्योत। अश्च्युतत्-अश्च्योतीत्। यकाररहितोऽप्ययम् ४२। श्चोतति। मन्थ ४३ विलोडने। विलोडनं प्रतिघातः। मन्थति। ममन्थ। यासुटः 'किदाशिषि' (सू. २२१६) इति कित्त्वात् 'अनिदिताम्-' (सू. ४१६) इति नलोपः, मथ्यात्। कुथि ४४ पुथि ४५ लुथि ४६ मथि ४७ हिंसासंक्लेशनयोः। इदित्त्वान्नलोपो न। कुन्थ्यात्। मन्थ्यात्। षिध ४८ गत्याम्। सेधति। सिषेध। सेधिता। असेधीत्। 'सात्पदाद्योः' (सू. २१२३) इति निषेधे प्राप्ते।

२२७०। **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** ८।३।६५। उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात्।

२२७१। **सदिरप्रतेः** ८।३।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात्।

२२७२। **स्तन्भेः** ८।३।६७। स्तन्भेः सौत्रस्य सस्य षः स्यात्। योगविभाग उत्तरार्थः। किञ्च 'अप्रतेः' इति नानुवर्तते। 'बाहुप्रतिष्टम्भविवृद्धमन्युः' इति।

२२७३। **अवाच्चालम्बनाविदूर्ययोः** ८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात्।

२२७४। **वेश्च स्वनो भोजने** ८।३।६९। व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने।

२२७५। **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** ८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति।

२२७६। **प्राक्सितादड्व्यवायेऽपि** ८।३।६३। '—सेवसित—' (सू. २२७५) इत्यत्र सितशब्दात्प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्-न्यषेधीत्। न्यषेधिष्यत्।

२२७७ । स्थादिष्वभ्यासेन चाभ्यासस्य ८।३।६४ । प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चाभ्यासस्य, न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः ।

२२७८ । सेधतेर्गतौ ८।३।११३ । गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति । षिधू ४९ शास्त्रे माङ्गल्ये च । शास्त्रं शासनम् ।

२२७९ । स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४ । स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् ।

२२८० । झषस्तथोर्धोऽधः ८।२।४० । झषः परयोस्तथयोर्धः स्यात् , न तु दधातेः । जश्त्वम् । सिषेद्ध–सिषेधिथ । सेद्धा—सेधिता । सेत्स्यति—सेधिष्यति । असैत्सीत् ।

२२८१ । झलो झलि ८।२।२६ । झलः परस्य सस्य लोपः स्याज्झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे असेधीत् । असेधिष्टाम् । इत्यादि । खादृ ५० भक्षणे । ऋकार इत् । खादति । चखाद । खद ५१ स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थैर्येऽकर्मकः खदति ।

२२८२ अत उपधायाः ७।२।११६ । उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद ।

२२८३ । णलुत्तमो वा ७।१।९१ । उत्तमो णल्वा णित्स्यात् । चखाद—चखद ।

२२८४ । अतो हलादेर्लघोः ७।२।७ । हलादेर्लघोरकारस्येडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् । अखादीत्—अखदीत् । बद ५२ स्थैर्ये । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ । बबाद-बबद । अबादीत्—अबदीत । गद ५३ व्यक्तायां वाचि । गदति ।

**२२८५ । नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८।४।१७।** उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णः स्याद्गदादिषु । प्रणिगदति । जगाद । रद ५४ विलेखने । विलेखनं भेदनम् । रराद । रेदतुः । णद ५५ अव्यक्ते शब्दे ।

**२२८६ । णो नः ६।१।६५।** धातोरादेर्णस्य नः स्यात् ।

**णोपदेशास्त्वनर्द नाटि नाथ् नाध् नन्द् नक्क नॄ नृतः ।**

नाटेर्दीर्घार्हस्य पर्युदासाद्धटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नॄ नन्योश्च केचिण्णोपदेशतामाहुः ।

**२२८७ । उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४ ।** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । अर्द ५६ गतौ याचने च । 'अत आदेः' ( सू. २२४८ ) ।

**२२८८ । तस्मान्नुड् द्विहलः ७।४।७१ ।** द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् । नर्द ५७ गर्द ५८ शब्दे । णोपदेशत्वाभावान्न णः । प्रनर्दति । गर्दति । जगर्द । तर्द ५९ हिंसायाम् । तर्दति । कर्द ६० कुत्सिते शब्दे । कुत्सिते कौक्षे । कर्दति । खर्द ६१ दन्दशूके । दशनहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । अति ६२ अदि ६३ बन्धने । अन्तति । आनन्त । अन्दति । आनन्द । इदि ६४ परमैश्वर्ये । इन्दति । इन्दाञ्चकार । बिदि ६५ अवयवे । पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । भिदि ६६ इति पाठान्तरम् । गडि ६७ वदनैकदेशे । गण्डति । **'अन्तस्थादयः पञ्चैते न तिङ्विषयाः'** इति काश्यपः । अन्ये तु तिङमपी-

च्छन्ति । णिदि ६८ कुत्सायाम् । निन्दति । प्रणिन्दति । टुनदि ६९ समृद्धौ ।

२२८९ । आदिर्ञिटुडवः १।३।५। उपदेशे धातोराद्या एते इतः स्युः । नन्दति । इदित्त्वान्नलोपो न, नन्द्यात् । चदि ७० आह्लादे । चचन्द । त्रदि ७१ चेष्टायाम् । तत्रन्द । कदि ७२ क्रदि ७३ क्लदि ७४ आह्वाने रोदने च । चकन्द । चक्रन्द चक्लन्द । क्लिदि ७५ परिदेवने । चिक्लिन्द । शुन्ध ७६ शुद्धौ । शुशुन्ध । नलोपः, शुध्यात् ।

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत् । शीकृ ७७ सेचने । तालव्यादिः । 'दन्त्यादिः' ७८ इत्येके । शीकते । शिशीके । लोकृ ७९ दर्शने । लोकते । लुलोके । श्लोकृ ८० सङ्घाते । सङ्घातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । द्रेकृ ८१ ध्रेकृ ८२ शब्दोत्साहयोः । उत्साहो वृद्धिरौद्धत्यं च । दिद्रेके । दिध्रेके । रेकृ ८३ शङ्कायाम् । रेकते । सेकृ ८४ स्रेकृ ८५ स्रकि ८६ श्रकि ८७ श्लकि ८८ गतौ । त्रयो दन्त्यादयः । द्वौ तालव्यादी । अषोपदेशत्वान्न षः । सिसेके । शकि ८९ शङ्कायाम् । शङ्कते । शशङ्के । अकि ९० लक्षणे । अङ्कते । आनङ्के । वकि ९१ कौटिल्ये । वङ्कते । मकि ९२ मण्डने । मङ्कते । कक ९३ लौल्ये । लौल्यं गर्वश्चापल्यं च । ककते । चकके । कुक ९४ वृक ९५ आदाने । कोकते । चुकुके । वर्कते । ववृके ।

*३५८ ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन* । चक ९६ तृप्तौ प्रतिघाते च । चकते । चेके । ककि ९७ वकि ९८ श्वकि ९९ त्रकि १०० ढौकृ १०१ त्रौकृ १०२ ष्वष्क १०३ वस्क १०४ मस्क १०५ टिकृ १०६ टीकृ १०७ तिकृ १०८ तीकृ १०९ रघि ११०

लघि १११ गत्यर्थाः। ववङ्गते। डुढौके। तुत्रौके।

॥५३९ सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः॥। ष्वष्कते। षष्वष्के। 'अत्र तृतीयो दन्त्यादिः' इत्येके। लघिर्भोजननिवृत्तावपि। अघि ११२ वघि ११३ मघि ११४ गत्याक्षेपे। आक्षेपो निन्दा। 'गतौ गत्यारम्भे च' इत्यन्ये। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। 'मघि' कैतवे च। राघृ ११५ लाघृ ११६ द्राघृ ११७ सामर्थ्ये। राघते। लाघते। 'ध्राघृ' ११८ इत्यपि केचित्। 'द्राघृ' आयामे च। आयामो दैर्घ्यम्। द्राघते। श्लाघृ ११९ कत्थने। श्लाघते।

अथ परस्मैपदिनः पञ्चाशत्। फक्क १२० नीचैर्गतौ। नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क। तक १२१ हसने। तकति। तकि १२२ कृच्छ्रजीवने। तङ्कति। बुक्क १२३ भषणे। भषणं श्वरवः। बुक्कति। कख १२४ हसने। प्रनिकखति। ओखृ १२५ राखृ १२६ लाखृ १२७ द्राखृ १२८ ध्राखृ १२९ शोषणालमर्थयोः। ओखतिः ओखाञ्चकार। शाखृ १३० श्लाखृ १३१ व्याप्तौ। शाखति। उख १३२ उखि १३३ वख १३४ वखि १३५ मख १३६ मखि १३७ णख १३८ णखि १३९ रख १४० रखि १४१ लख १४२ लखि १४३ इख १४४ इखि १४५ ईखि १४६ वल्ग १४७ रगि १४८ लगि १४९ अगि १५० वगि १५१ मगि १५२ तगि १५३ त्वगि १५४ श्रगि १५५ श्लगि १५६ इगि १५७ रिगि १५८ लिगि १५९ गत्यर्थाः। कवर्गद्वितीयान्ता पञ्चदश। तृतीयान्तास्त्रयोदश। इह खान्तेषु 'रिख' १६० 'त्रख' १६१ 'त्रिखि' १६२ 'शिखि' १६३ इत्यपि चतुरः केचित्पठन्ति।

२२९०। अभ्यासस्यासवर्णे ६।४।७८। अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। उवोख। सन्निपातपरिभाषया

'इजादेः–' (सू. २२१७) इत्याम्न। ऊखतुः। ऊखुः। इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्भ्रस्वः प्राप्तो न भवति, सकृत्प्रवृत्तत्वात्। आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः। 'वार्णादाङ्गं बलीयः' (प०५६) इति न्यायात्परत्वाच्च। उङ्खति। ववखतुः। वङ्खति। मेखतुः। 'त्वगि' कम्पने च। युगि १६४ जुगि १६५ बुगि १६६ वर्जने। युङ्गति। घघ १६७ हसने। घघति। जघाघ। मघि १६८ मण्डने। मङ्घति। शिघि १६९ आघ्राणे। शिङ्घति।

अथ चवर्गीयान्ताः। तत्रानुदात्तेत एकविंशतिः। वर्च १७० दीप्तौ। वर्चते। षच १७१ सेचने सेवने च। सचते। सेचे। सचिता। लोचृ १७२ दर्शने। लोचते। लुलोचे। शच १७३ व्यक्तायां वाचि। शेचे। श्वच १७४ श्वचि १७५ गतौ। श्वचते। श्वञ्चते। कच १७६ बन्धने। कचते। कचि १७७ काचि १७८ दीप्तिबन्धनयोः। चकञ्चे। चकाञ्चे। मच १७९ मुचि १८० कल्कने। कल्कनं दम्भः शाठ्यं च। 'कथनम्' इत्यन्ये। मेचे। मुमुञ्चे। मचि १८१ धारणोच्छ्रायपूजनेषु। ममञ्चे। पचि १८२ व्यक्तीकरणे। पञ्चते। ष्टुच १८३ प्रसादे। स्तोचते। तुष्टुचे। ऋज १८४ गतिस्थानार्जनोपार्जनेषु। अर्जते। नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते, तेन द्विहल्त्वान्नुट्। आनृजे। ऋजि १८५ भृजी १८६ भर्जने। ऋञ्जते। 'उपसर्गादृति–' (सू. ७४) इति वृद्धिः, प्रार्ञ्जते। ऋञ्जाञ्चक्रे। आर्जिष्ट। भर्जते। बभृजे। अभर्जिष्ट। एजृ १८७ भ्रेजृ १८८ भ्राजृ १८९ दीप्तौ। एजाञ्चक्रे। ईज १९० गतिकुत्सनयोः। ईजाञ्चक्रे।

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः। शुच १९१ शोके। शोचति। कुच १९२ शब्दे तारे। कोचति। कुञ्च १९३ क्रुञ्च १९४

कौटिल्याल्पीभावयोः। 'अनिदिताम्-' (सू. ४१६) इति नलोपः। कुच्यात्। क्रुच्यात्। लुञ्च १९५ अपनयने। लुच्यात्। अञ्चु १९६ गतिपूजनयोः। अच्यात्। गतौ नलोपः। पूजायां तु अञ्च्यात्। वञ्चु १९७ चञ्चु १९८ तञ्चु १९९ त्वञ्चु २०० म्रुञ्चु २०१ म्लुञ्चु २०२ म्रुचु २०३ म्लुचु २०४ गत्यर्थाः। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्।

**२२९१। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१।५८।** एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत्-अम्रोचीत्। अम्लुचत्-अम्लोचीत्। ग्रुचु २०५ ग्लुचु २०६ कुजु २०७ खुजु २०८ स्तेयकरणे। जुग्रोच। अग्रुचत्-अग्रोचीत्। जुग्लोच। अग्लुचत्। अग्लोचीत्। अकोजीत्। अखोजीत्। ग्लुञ्चु २०९ षस्ज २१० गतौ। अङ्, अग्लुचत्-अग्लुञ्चीत्। सस्य श्चुत्वेन शः, जश्त्वेन जः, सज्जति। अयमात्मनेपद्यपि। सज्जते। गुजि २११ अव्यक्ते शब्दे। गुञ्जति। गुञ्ज्यात्। अर्च २१२ पूजायाम्। आनर्च। म्लेच्छ २१३ अव्यक्ते शब्दे। अस्फुटेऽपशब्दे चेत्यर्थः। म्लेच्छति। मिम्लेच्छ। लछ २१४ लाछि २१५ लक्षणे। ललच्छ। ललाञ्छ। वाछि २१६ इच्छायाम्। वाञ्छति। आछि २१७ आयामे। आञ्छति। 'अत आदेः' (सू. २२४८) इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाभावान्न नुट्, आञ्छ। तपरकरणं मुखसुखार्थमिति मते तु नुट्, आनाञ्छ। ह्रीच्छ २१८ लज्जायाम्। जिह्रीच्छ। हुर्च्छा २१९ कौटिल्ये। '**कौटिल्यमपसरणम्**' इति मैत्रेयः। 'उपधायां च' (सू. २२६५) इति दीर्घः। हूर्च्छति। मुर्च्छा २२० मोहसमुच्छ्राययोः। मूर्च्छति। स्फुर्च्छा २२१ विस्तृतौ। स्फूर्च्छति। युच्छ २२२ प्रमादे। युच्छति। उछि २२३ उञ्छे।

'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् ।'

इति यादवः । उञ्छति । उञ्छाञ्चकार । उछी २२४ विवासे । विवासः समाप्तिः । प्रायेणाऽयं विपूर्वः । व्युच्छति । धृज २२५ धृजि २२६ ध्रज २२७ ध्रजि २२८ ध्वज २२९ ध्वजि २३० गतौ । धर्जति । धृञ्जति । ध्रजति । ध्रञ्जति । ध्वजति । ध्वञ्जति । कूज २३१ अव्यक्ते शब्दे । चुकूज । अर्ज २३२ षर्ज २३३ अर्जने । अर्जति । आनर्ज । सर्जति । ससर्ज । गर्ज २३४ शब्दे । गर्जति । तर्ज २३५ भर्त्सने । तर्जति । ततर्ज । कर्ज २३६ व्यथने । चकर्ज । खर्ज २३७ पूजने च । चखर्ज । अज २३८ गतिक्षेपणयोः । अजति ।

२२९२ । **अजेर्व्यघञपोः** २।४।५६। अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये घञमपं च वर्जयित्वा । ॐ५४० **वलादावार्धधातुके वेष्यते** ॐ । विवाय । विव्यतुः । विव्युः । अत्र वकारस्य हल्परत्वात् 'उपधायां च' ( सू० २२६५ ) इति दीर्घे प्राप्ते 'अचः परस्मिन्–' (सू० ५० ) इति स्थानिवद्भावेनाच्परत्वम् । न च 'न पदान्त'–( सू. ५१ ) इति निषेधः, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इत्युक्तेः । थलि 'एकाचः—' ( सू० २२४६ ) इतीण्निषेधे प्राप्ते ।

२२९३ । **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** ७।२।१३। एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम्–'प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्यः' इति । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ।

२२९४ । **अचस्तास्वत्थल्यनिटो नित्यम्** ७।२।३१। उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ।

२२९५ । उपदेशेऽत्वतः ७।२।६२। उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् ।

२२९६ । ऋतो भारद्वाजस्य ७।२।६३। तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्र संग्रहः—

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

न च स्तुद्रुवादीनामपि थलि विकल्पः शङ्क्यः, 'अचस्तास्वत्-' ( सू० २२९४ ) इति 'उपदेशेऽत्वतः' ( सू० २२९५ ) इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः, 'अनन्तरस्य-' ( प. ६२ ) इति न्यायात् । विवयिथ—विवेथ—आजिथ । विव्यथुः । विव्य । विवाय—विवय । विव्यिव । विव्यिम । वेता—अजिता । वेष्यति—अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ।

२२९७ । सिचि वृद्धिः परस्मैपदेषु ७।२।१। इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदे परे सिचि । अवैषीत्-आजीत् । अवेष्यत्-आजिष्यत् । तेज २३९ पालने । तेजति । खज २४० । मन्थे । खजति । खजि २४१ गतिवैकल्ये । खञ्जति । एज २४२ कम्पने । एजाञ्चकार । टुओस्फूर्जा २४३ वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । क्षि २४४ क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ-चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता ।

२२९८ । अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५। अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे, नतु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । क्षीज २४५ अव्यक्ते शब्दे । कूजिना सहायं पठितुं युक्तः ।

चिक्षीज । लज २४६ लजि २४७ भर्त्सने । लाज २४८ लाजि २४९ भर्जने च । जज २५० जजि २५१ युद्धे । तुज २५२ हिंसायाम् । तोजति । तुतोज । तुजि २५३ पालने । गज २५४ गजि २५५ गृज २५६ गृजि २५७ मुज २५८ मुजि २५९ शब्दार्थाः । गज मदने च । वज २६० व्रज २६१ गतौ । 'वदव्रज'-( सू० २२६७ ) इति वृद्धिः, अव्राजीत् ।

अथ टवर्गीयान्ताः शाड्यन्ता अनुदात्तेतः षट्त्रिंशत् । अट्ट २६२ अतिक्रमहिंसयोः । दोपधोऽयम् । 'तोपधः' इत्यन्ये । अट्टते । आनट्टे । वेष्ट २६३ वेष्टने । विवेष्टे । चेष्ट २६४ चेष्टायाम् । अचेष्टिष्ट । गोष्ट २६५ लोष्ट २६६ संघाते । जुगोष्टे । लुलोष्टे । घट्ट २६७ चलने । जघट्टे । स्फुट २६८ विकसने । स्फोटते । पुस्फुटे । अठि २६९ गतौ । अण्ठते । आनण्ठे । वठि २७० एकचर्यायाम् । ववण्ठे । मठि २७१ कठि २७२ शोके । शोक इह आध्यानम् । मण्ठते कण्ठते । मुठि २७३ पालने । मुण्ठते । हेठ २७४ विबाधायाम् । जिहेठे । एठ २७५ च । एठाञ्चक्रे । हिडि २७६ गत्यनादरयोः । हिण्डते । जिहिण्डे । हुडि २७७ संघाते । जुहुण्डे । कुडि २७८ दाहे । चुकुण्डे । वडि २७९ विभाजने । मडि २८० च । ववण्डे । भडि २८१ परिभाषणे । परिहासः सनिन्दोपालम्भश्च परिभाषणम् । बभण्डे । पिडि २८२ सङ्घाते । पिपिण्डे । मुडि २८३ मार्जने । मार्जनं शुद्धिर्न्यग्भावश्च । मुण्डते । तुडि २८४ तोडने । तोडनं दारणं हिंसनं च । तुण्डते । हुडि २८५ वरणे । वरणं स्वीकारः । हरणे इत्येके । हुण्डते । चडि २८६ कोपे । चण्डते । शडि २८७ रुजायां सङ्घाते च शण्डते । तडि २८८ ताडने । तण्डते । पडि २८९ गतौ । पण्डते । कडि २९० मदे ।

कण्डते। खडि २९१ मन्थे। हेडृ २९२ होडृ २९३ अनादरे। जिहेडे। जुहोडे। बाडृ २९४ आप्लाव्ये। बशादिः। आप्लाव्यमाप्लवः। बाडते। द्राडृ २९५ ध्राडृ २९६ विशरणे। द्राडते। ध्राडते। शाडृ २९७ श्लाघायाम्। शाडते।

अथ आटवर्गीयान्तसमाप्तेः परस्मैपदिनः। शौटृ २९८ गर्वे। शौटति। शुशौट। यौटृ २९९ बन्धे। यौटति। म्लेटृ ३०० म्रेडृ ३०१ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। म्लेटति। म्रेडति। कटे ३०२ वर्षावरणयोः। चटे ३०३ इत्येके। चकाट। सिचि 'अतो हलादेर्लघोः' (सू० २२८४) इति वृद्धौ प्राप्तायाम्।

२२९९। ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि। अकटीत्। अट ३०४ पट ३०५ गतौ आट। आटतुः। आटुः। पपाट। पेटतुः। पेटुः। रट ३०६ परिभाषणे। रराट। लट ३०७ बाल्ये। ललाट। शट ३०८ रुजा विशरणगत्यवसादनेषु। शशाट। वट ३०९ वेष्टने। ववाट। ववटतुः। ववटुः। ववटिथ। किट ३१० खिट ३११ त्रासे। केटति। खेटति। शिट ३ २ षिट ३१३ अनादरे। शेटति। शिशेट। सेटति। सिषेट। जट ३१४ झट ३१५ सङ्घाते। भट ३१६ भृतौ। तट ३१७ उच्छ्राये। खट ३१८ काङ्क्षायाम्। णट ३१९ नृत्तौ। पिट ३२० शब्दसङ्घातयोः। हट ३२१ दीप्तौ। षट ३२२ अवयवे। लुट ३२३ विलोडने। डान्तोऽयम् ३२४ इत्येके। चिट ३२५ परप्रेष्ये। विट ३२६ शब्दे। बिट ३२७ आक्रोशे। बशादिः। हिट ३२८ इत्येके। इट ३२९ किट ३३० कटी ३३१ गतौ। एटति। केटति कटति। ईकारः 'श्वीदितो निष्ठायाम्' सू० ३०३९) इतीण्निषेधार्थः। केचित्तु इदितं ३३२ मत्वा नुमि कृते 'कण्टति'— इत्यादि वदन्ति।

अन्ये तु 'इ' ३३३ 'ई' ३३४ इति प्रश्लिष्य अयति । इयाय । इयतुः । इयुः। इययिथ-इये । ईयथ । इयाय-इयय । दीर्घस्य तु 'इजादेश्च' (सू० २२३७) इत्यामि 'अयाञ्चकार' इत्यादि उदाहरन्ति । मडि ३३५ भूषायाम् । कुडि ३३६ वैकल्ये । कुण्डति । 'कुण्डते' इति तु दाहे गतम् मुड ३३७ प्रुड ३३८ मर्दने । चुडि ३३९ अल्पीभावे । मुडि ३४० खण्डने । मुण्डति । पुडि च ३४१ इत्येके । पुण्डति । रुटि ३४२ लुटि ३४३ स्तेये । रुण्टति । लुण्टति । रुठि ३४४ लुठि ३४५ इत्येके । रुडि ३४६ लुडि ३४७ इत्यपरे । स्फुटिर् ३४८ विशरणे । इरित्त्वादङ् वा, अस्फुटत्–अस्फोटीत् । स्फुटि ३४९ इत्यपि केचित् । इदित्त्वान्नुम्, स्फुण्टति । पठ ३५० व्यक्तायां वाचि । पेठतुः । पेठिथ । अपठीत्– अपाठीत । वठ ३५१ स्थौल्ये । ववठतुः । ववठिथ । मठ ३५२ मद-निवासयोः । कठ ३५३ कृच्छ्रजीवने । रट ३५४ परिभाषणे । रठ ३५५ इत्येके । हठ ३५६ प्लुतिशठत्वयोः । बलात्कारे इत्येके । हठति । जहाठ । रुठ ३५७ लुठ ३५८ उठ ३५९ उपघाते । ओठति । ऊठ ३६० इत्येके । ऊठति । ऊठाञ्चकार । पिठ ३६१ हिंसासंक्लेशनयोः । शठ ३६२ कैतवे च । शुठ ३६३ प्रतिघाते । शोठति । शुठि ३६४ इति स्वामी । शुण्ठति । कुठि ३६५ च । कुण्ठति । लुठि ३६६ आलस्ये प्रतिघाते च । शुठि ३६७ शोषणे । रुठि ३६८ लुठि ३६९ गतौ । चुड्ड ३७० भावकरणे । भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । अड्ड ३७१ अभियोगे । अड्डति आनड्ड । कड्ड ३७२ कार्कश्ये । कड्डति । चुड्डादयस्त्रयो दोपधाः । तेन क्विपि 'चुत्' 'अत्' 'कत्' इत्यादि । क्रीडृ ३७३ विहारे । चिक्रीड । तुडृ ३७४ तोडने । तोडति । तुतोड । तूडृ ३७५ इत्येके । हुडृ ३७६ हूडृ ३७७ होडृ ३७८

गतौ । हुड्यात् । हूड्यात् । होड्यात् । रौडृ ३७९ अनादरे । रोडृ ३८० लोडृ ३८१ उन्मादे । अड ३८२ उद्यमे । अडति । आड । आडतुः । आडुः । लड ३८३ विलासे । लडति । डलयोर्लरयोश्चैकत्वस्मरणाद् 'ललति' इति स्वाम्यादयः । कड ३८४ मदे । कडति । कडि ३८५ इत्येके । कण्डति । गडि ३८६ वदनैकदेशे । गण्डति ।

इति टवर्गीयान्ताः ।

अथ पवर्गीयान्ताः । तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत् । तिपृ ३८७ तेपृ ३८८ ष्टिपृ ३८९ ष्टेपृ ३९० क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादिनियमादिट्, तितिपिषे । तेप्ता । तेप्स्यते ।

२३०० । लिङ्सिचावात्मनेपदेषु १।२।११। इक्समीपाद्धलः परौ झलादी लिङ्, आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः । कित्त्वान्न गुणः । तिप्सीष्ट । तिप्सीयास्ताम् । तिप्सीरन् । लुङि 'झलो झलि' (सू० २२८१) इति सलोपः, अतिप्त । अतिप्साताम् । अतिप्सत । तेपते तितेपे । तिष्टिपे । तिष्टिपाते तिष्टिपिरे । तिष्टेपे । तिष्टेपाते । तिष्टेपिरे । तेपृ कम्पने च । ग्लेपृ ३९१ दैन्ये । ग्लेपते । टुवेपृ ३९२ कम्पने । वेपते । केपृ ३९३ गेपृ ३९४ ग्लेपृ ३९५ च । चात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत इत्याह । ग्लेपेरर्थभेदात्पुनः पाठः । मेपृ ३९६ रेपृ ३९७ लेपृ ३९८ गतौ । त्रपूष् ३९९ लज्जायाम् । त्रपते ।

२३०१ । तॄफलभजत्रपश्च ६।४।१२२। एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे । त्रेपाते । त्रेपिरे । ऊदित्वादिड् वा, त्रपिता-त्रप्ता । त्रपिषीष्ट-त्रप्सीष्ट । कपि ४०० चलने ।

कम्पते । चकम्पे । रबि ४०१ लबि ४०२ अबि ४०३ शब्दे । ररम्बे । ललम्बे । आनम्बे । लबि ४०४ अवस्रंसने च । कबृ ४०५ वर्णे । चकबे । क्लीबृ ४०६ अधाष्टर्ये । चिक्लीबे । क्षीबृ ४०७ मदे । क्षीबते । शीभृ ४०८ कत्थने । शीभते । चीभृ ४०९ च । रेभृ ४१० शब्दे । रिरेभे । अभि ४११ रभी ४१२ क्वचित्पठ्येते । अम्भते । रम्भते । ष्टभि ४१३ स्कभि ४१४ प्रतिबन्धे । स्तम्भते । उत्तम्भते, 'उदः स्थास्तम्भोः'-( सू० ११८ ) इति पूर्वसवर्णः । विस्तम्भते, 'स्तन्भेः' ( सू० २२७२ ) इति षत्वं तु न भवति, श्नुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् । तद्बीजं तु—'स्थास्तम्भोः'-( सू० ११८ ) इति पवर्गीयोपधपाठः, 'स्तन्भेः' ( सू० २२७२ ) इति तवर्गीयोपधपाठश्चेति माधवः । केचिदस्य टकार औपदेशिक इत्याहुः । तन्मते-विष्टम्भते । ष्टम्भते । टष्टम्भे । जभी ४१५ जृभि ४१६ गात्रविनामे ।

२३०२ । रधिजभोरचि ७।१।६१ । एतयोर्नुमागमः स्यादचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । जृम्भते । जजृम्भे । शल्भ ४१७ कत्थने । शशल्भे । वल्भ ४१८ भोजने । दन्त्योष्ठ्यादिः । ववल्भे । गल्भ ४१९ धाष्टर्ये । गल्भते । श्रम्भु ४२० प्रमादे । तालव्यादिर्दन्त्यादिश्च । श्रम्भते । स्रम्भते । ष्टुभु ४२१ स्तम्भे । स्तोभते । विष्टोभते । तुष्टुभे । व्यष्टोभिष्ट ।

अथ परस्मैपदिनः । गुपू ४२२ रक्षणे ।

२३०३ । गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८ । एभ्य आयप्रत्ययः स्यात्स्वार्थे । 'पुगन्त—' ( सू० २१८९ ) इति गुणः ।

२३०४ । सनाद्यन्ता धातवः ३।१।३२ । सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः । गोपायति ।

**२३०५ । आयादय आर्धधातुके वा ३।१।३१।** आर्धधातुकविवक्षायामायादयो वा स्युः ।

**२३०६ । कास्प्रत्ययादाममन्त्रे लिटि ३।१।३५।** कास्धातोः प्रत्ययान्तेभ्यश्च आम् स्याल्लिटि, न तु मन्त्रे । **%५४१ कास्यनेकाज्ग्रहणं कर्तव्यम्%** । सूत्रे प्रत्ययग्रहणमपनीय तत्स्थाने 'अनेकाचः' इति वाच्यमित्यर्थः ।

**२३०७ । आर्धधातुके ६।४।४६ ।** इत्यधिकृत्य ।

**२३०८ । अतो लोपः ६।४।४८ ।** आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे । गोपायाञ्चकार । गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । ऊदित्त्वाद्वेट्, जुगोपिथ—जुगोप्थ । गोपायिता—गोपिता—गोप्ता । गोपाय्यात्—गुप्यात् । अगोपायीत्—अगोपीत्—अगौप्सीत् । धूप ४२३ सन्तापे । धूपायति । धूपायाञ्चकार । दुधूप । धूपायितासि—धूपितासि । जप ४२४ जल्प ४२५ व्यक्तायां वाचि । जप ४२६ मानसे च । चप ४२७ सान्त्वने । वप ४२८ समवाये । समवायः सम्बन्धः सम्यगवबोधो वा । सपति । रप ४२९ लप ४३० व्यक्तायां वाचि । चुप ४३१ मन्दायां गतौ । चोपति । चुचोप । चोपिता । तुप ४३२ तुम्प ४३३ त्रुप ४३४ त्रुम्प ४३५ तुफ ४३६ तुम्फ ४३७ त्रुफ ४३८ त्रुम्फ ४३९ हिंसार्थाः । तोपति । तुतोप । तुम्पति । तुतुम्प । तुतुम्पतुः, संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न 'किदाशिषि' ( सू० २२१६ ) इति कित्त्वान्नलोपः, तुप्यात् । 'प्रात्तुम्पतौ गति कर्तरि' इति पारस्करादिगणे पाठात्सुट्, प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न, प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति ।

इह्याद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः । पर्पं ४४० रफ ४४१ रफि ४४२ अर्ब ४४३ पर्ब ४४४ लर्ब ४४५ बर्ब ४४६ मर्ब ४४७ कर्ब ४४८ खर्ब ४४९ गर्ब ४५० शर्ब ४५१ षर्ब ४५२ चर्ब ४५३ गतौ । आद्यः प्रथमान्तः । ततो द्वौ द्वितीयान्तौ । तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति, पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति । कुबि ४५४ आच्छादने । कुम्बति । लुबि ४५५ तुबि ४५६ अर्दने । लुम्बति । तुम्बति । चुबि ४५७ वक्त्रसंयोगे । चुम्बति । षृभु ४५८ षृम्भु ४५९ हिंसार्थौ । सर्भति । ससर्भ । सर्भिता । सृम्भति । ससृम्भ । सृम्भ्यात् । षिभु ४६० षिम्भु ४६१ इत्येके । सेभति । सिम्भति । शुभ ४६२ शुम्भ ४६३ भाषणे । भासने इत्येके । हिंसायाम् इत्यन्ये ।

**अथानुनासिकान्ताः । तत्र कम्यन्ता अनुदात्तेतो दश ।** घिणि ४६४ घुणि ४६५ घृणि ४६६ ग्रहणे । नुम्, ष्टुत्वम्, घिण्णते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते । जघृण्णे । घुण ४६७ घूर्ण ४६८ भ्रमणे । घोणते । घूर्णते । इमौ तुदादौ परस्मैपदिनौ । पण ४६९ व्यवहारे स्तुतौ च । पन ४७० च । स्तुतौ इत्येव सम्बद्ध्यते, पृथक् निर्देशात् । पनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु—पणते, पेणे, पणिता इत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम्, पणायति । पणायाञ्चकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पणिषीष्ट । पनायति । पनायाञ्चकार । पेने । भाम ४७१ क्रोधे । भामते । बभामे । क्षमूष् ४७२ सहने ।

क्षमते। चक्षमे। चक्षमिषे। चक्षंसे। चक्षमिध्वे। चक्षमिवहे।

२३०९। म्वोश्च ८।२।६५। मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे। णत्वम्, चक्षण्वहे। चक्षमिमहे-चक्षण्महे। क्षमिष्यते-क्षंस्यते। क्षमेत। आशिषि क्षमिषीष्ट-क्षंसीष्ट। अक्षमिष्ट-अक्षंस्त। कमु ४७३ कान्तौ कान्तिरिच्छा।

२३१०। कमेर्णिङ् ३।१।३०। स्वार्थे। ङित्वात्तङ्, कामयते।

२३११। अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५। 'आम्' 'अन्त' 'आलु' 'आय्य' 'इत्नु' 'इष्णु' एषु णेरयादेशः स्यात्। वक्ष्यमाणलोपापवादः। कामयाञ्चक्रे। 'आयादय आर्धधातुके वा' (सू. २३०५) चकमे। कामयिता-कमिता। कामयिष्यते-कमिष्यते।

२३१२। णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८। ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे। 'अकाम् इ-अत' इति स्थिते।

२३१३। णेरनिटि ६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः स्यात्। परत्वात् 'एरनेकाचः-' (सू. २७२) इति यणि प्राप्ते। ॐ५४२ ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनॐ। इति वार्तिकम्। णिलोपस्य तु पाचयतेः 'पाक्तिः' इत्यादि क्तिजन्तमवकाश इति भावः। वस्तुतस्तु 'अनिटि' इति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः। तथाचेयङादेरपवाद एवायम्। इयङ्, अततक्षत्। यण्, आटिटत्। गुणः, कारणा। वृद्धिः, कारकः। दीर्घः, कार्यते।

२३१४। णौ चङ्युपधाया ह्रस्वः ७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्।

२३१५। चङि ६।१।११। चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य।

२३१६ । सन्वल्लघुनि चङ्परेऽनग्लोपे ७।४।९३। 'चङ्परे' इति बहुव्रीहिः । स च 'अङ्गस्य' इति च द्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् । तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति । अथवा 'अङ्गस्य' इति नावर्तते । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् ।

२३१७ । सन्यतः ७।४।७९। अभ्यासस्यात इकारः स्यात्सनि ।

२३१८ । दीर्घो लघोः ७।४।९४। लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकमत । णिङभावपक्षे—⊛५४३ कमेश्च्लेश्चङ् वक्तव्यः⊛ । णेरभावान्न दीर्घसन्वद्भावौ, अचकमत ।

संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाचित्रिति माधवः ॥ १ ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किं त्वस्यावयवः कश्चित्तस्मादेकाचिवद् द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ।
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥ ५ ॥

**अथ क्रमयन्तास्त्रिंशत्परस्मैपदिनः** । अण ४७४ रण ४७५ वण ४७६ भण ४७७ मण ४७८ कण ४७९ क्वण ४८० व्रण ४८१ भ्रण ४८२ ध्वण ४८३ शब्दार्थाः । अणति । रणति । वणति । वकारादित्वादेत्वाभ्यासलोपौ न, ववणतुः । ववणिथ । धणिः ४८४ अपि कैश्चि-

त्पठ्यते । धणति । ओणृ ४८५ अपनयने । ओणति । ओणाञ्चकार । शोणृ ४८६ वर्णगत्योः । शोणति । शुशोण । श्रोणृ ४८७ संघाते । श्रोणति । श्लोणृ ४८८ च । शोणादयस्त्रयोऽमी तालव्योष्मादयः पैणृ ४८९ गतिप्रेरणश्लेषणेषु । प्रैणृ ४९० इति क्वचित्पठ्यते । पिप्रैण । ध्रण ४९१ शब्दे उपदेशे नान्तोऽयम् । 'रषाभ्याम्'–( सू० २३५ ) इति णत्वम् । ध्रणति । णोपदेशफलं तु यङ्लुकि, दन्ध्रन्ति । बण ४९२ इत्यपि केचित् । बेणतुः । बेणिथ । कनी ४९३ दीप्तिकान्तिगतिषु । चकान । ष्टन ४९४ वन ४९५ शब्दे । स्तनति । वनति । वन ४९६ षण ४९७ सम्भक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः ।

**२३१९ । ये विभाषा** ६।४।४३। जनसनखनामात्वं वा स्याद्यादौ क्ङिति । सायात्-सन्यात् । अम ४९८ गत्यादिषु । 'कनी दीप्तिकान्तिगति'–( धा० ४९३ ) इत्यत्र गतेः परयोः शब्दसम्भक्त्योरादिशब्देन ग्रहः । अमति । आम । द्रम ४९९ हम्म ५०० मीमृ ५०१ गतौ । द्रमति । दद्राम । 'ह्म्यन्त'–(सू० २२९९) इति न वृद्धिः, अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्दे च । चमु ५०२ छमु ५०३ जमु ५०४ झमु ५०५ अदने ।

**२३२० । ष्ठिवुक्लमुचमां शिति** ७।३।७५। एषामचो दीर्घः स्याच्छिति । ॐ५४४ **आङि चम इति वक्तव्यम्**ॐ । आचामति । आङि किम् ? चमति, विचमति । अचमीत् । जिमि ५०६ केचित्पठन्ति । जेमति । क्रमु ५०७ पादविक्षेपे ।

**२३२१ । वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** ३।१।७० । एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे ।

२३२२। **क्रमः परस्मपदेषु** ७।३।७६। क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति। क्राम्यति—क्रामति। चक्राम। क्राम्यतु-क्रामतु।

२३२३। **स्नुक्रमोरनात्मनेपदनिमित्ते** ७।२।३६। अत्रैवेट्। अक्रमीत्। **अथ रेवत्यन्ता अनुदात्तेतः।** अय ५०८ वय ५०९ पय ५१० मय ५११ चय ५१२ तय ५१३ णय ५१४ गतौ। अयते।

२३२४। **दयायासश्च** ३।१।३७। 'दय' 'अय' 'आस्' एभ्य स्याल्लिटि। अयाञ्चक्रे। अयिता। अयिषीष्ट।

२३२५। **विभाषेटः** ८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात्। अयिषीढ्वम्-अयिषीध्वम्। आयिष्ट। आयिढ्व -आयिध्वम्।

२३२६। **उपसर्गस्यायतौ** ८।२।१९। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते। निस्दुसो रुत्वस्यासिद्धत्वान्न लत्वम्, निरयते, दुरयते। निर्दुरोस्तु–निलयते दुलयते। 'प्रत्ययः' इति त्विणो रूपम्। अथ कथम् **उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः?** 'इट किट कटी' (३२९–३३१), इत्यत्र प्रश्लिष्टस्य भविष्यति। यद्वा **'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्'** (प.९७) चक्षिङो ङित्करणाज्ज्ञापकात्। वादित्वात् ववये। पेये। मेये। चेये। तेये। प्रणयते। नेये। दय ५१५ दानगतिरक्षणहिंसादानेषु। आदानं ग्रहणम्। दयाञ्चक्रे। रय ५१६ गतौ। ऊयी ५१७ तन्तुसन्ताने। ऊयाञ्चक्रे। पूयी ५१८ विशरणे दुर्गन्धे च। पूयते। पुपूये। क्नूयी ५१९ शब्दे उन्दने च। चुक्नूये। क्ष्मायी ५२० विधूनने। चक्ष्माये। स्फायी ५२१ ओप्यायी ५२२ वृद्धौ। स्फायते। पस्फाये। प्यायते।

२३२७। **लिड्यङोश्च** ६।१।२९। लिटि यङि च प्यायः पीभावः

स्यात्। पुनःप्रसङ्गविज्ञानात् पीशब्दस्य द्वित्वम्। 'एरनेकाचः-' (सू. २७२) इति यण्। पिप्ये। पिप्याते। पिप्यिरे।

२३२८। दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३। ६१। एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे।

२३२९। चिणो लुक् ६।४।१०४। चिणः परस्य तशब्दस्य लुक्स्यात्। अप्यायि-अप्यायिष्ट। तायृ ५२३ सन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। तताये। अतायि-अतायिष्ट। शल ५२४ चलनसंवरणयोः। वल ५२५ वल्ल ५२६ संवरणे सञ्चरणे च। ववले। ववल्ले। मल ५२७ मल्ल ५२८ धारणे। मेले। ममल्ले। भल ५२९ भल्ल ५३० परिभाषणहिंसादानेषु। बभले। बभल्ले। कल ५३१ शब्दसङ्ख्यानयोः। कलते। चकले। कल्ल ५३२ अव्यक्ते शब्दे। कल्लते। 'अशब्दे' इति स्वामी। अशब्दस्तूष्णींभाव इति च। तेवृ ५३३ देवृ ५३४ देवने। तितेवे। दिदेवे। षेवृ ५३५ गेवृ ५३६ ग्लेवृ ५३७ पेवृ ५३८ मेवृ ५३९ म्लेवृ ५४० सेवने। 'परिनिविभ्यः-(सू. २२७५) इति षत्वम्। परिषेवते। सिषेवे। अयं सोपदेशोऽपीति न्यासकारादयः, तद्भाष्यविरुद्धम्। गेवते। जिगेवे। जिग्लेवे। पिपेवे। मेवते। म्लेवते। शेवृ ५४१। खेवृ ५४२ क्लेवृ ५४३ इत्यप्येके। रेवृ ५४४ प्लवगतौ। प्लवगतिः प्लुतगतिः। रेवते।

अथावत्यन्ताः परस्मैपदिनः। मव्य ५४५ बन्धने। ममव्य। सूर्क्ष्य ५४६ ईर्क्ष्य ५४७ ईर्ष्य ५४८ ईर्ष्यार्थाः। हय ५४९ गतौ। अहयीत्, यान्तत्वान्न वृद्धिः। शुच्य ५५० अभिषवे। अवयवानां शिथिलीकरणं सुरायाः सन्धानं वा अभिषवः, स्नानं च। शुशुच्य। चुच्य ५५१ इत्येके। हर्य ५५२ गतिकान्त्योः। जहर्य। अल

५५३ भूषणपर्याप्तिवारणेषु । अलति । आल ।

२३३० । अतो ल्रान्तस्य ७।२।२। 'ल्र' इति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिःस्यात्परस्मैपदपरे सिचि । 'नेटि' (सू. २२६८) इति निषेधस्य 'अतो हलादेः' ( सू. २२८६ ) इति विकल्पस्य चापवादः । मा भवान् अलीत् । अयं स्वरितेत् , इत्येके । तन्मते 'अलते'इत्याद्यपि । ञिफला । ५५४ विशरणे । 'तॄफल'·(सू.२३०१) इत्येत्वम् , फेलतुः । फेलुः । अफालीत् । मील ५५५ श्मील ५५६ स्मील ५५७ क्ष्मील ५५८ निमेषणे । निमेषणं सङ्कोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः । पील ५५९ प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । णील ५६० वर्णे । निनील । शील ५६१ समाधौ । शीलति । कील ५६२ बन्धने । कूल ५६३ आवरणे । शूल ५६४ रुजायां सङ्घोषे च । तूल ५६५ निष्कर्षे । निष्कर्षो निष्कोषणम् । तत्रान्तर्गतस्य बहिर्निस्सारणम् । तुतूल । पूल ५६६ संघाते । मूल ५६७ प्रतिष्ठायाम् । फल ५६८ निष्पत्तौ । फेलतुः । फेलुः । चुल्ल ५६९ भावकरणे । भावकरणमभिप्रायाविष्कारः । फुल्ल ५७० विकासने । चिल्ल ५७१ शैथिल्ये भावकरणे च । तिल ५७२ गतौ । तेलति । तिल्ल ५७३ इत्येके । तिल्लति । वेल्ल ५७४ चेल्ल ५७५ केल्ल ५७६ खेल्ल ५७७ क्ष्वेल ५७८ वेल्ल ५७९ चलने । पञ्च ऋदितः षष्ठो लोपधः । पेल्ल ५८० फेल्ल ५८१ शेल्ल ५८२ गतौ । षेल्ल ५८३ इत्येके । स्खल ५८४ सञ्चलने । चस्खाल । अस्खालीत् । खल ५८५ सञ्चये । गल ५८६ अदने । गलति । अगालीत् । षल ५८७ गतौ । सलति । दल ५८८ विशरणे । श्वल ५८९ श्वल्ल ५९० आशुगमने । शश्वाल । अश्वालीत् । शश्वल्ल । अश्वल्लीत् । खोल्ल ५९१ खोॠ ५९२ गतिप्रतिघाते । खोलति । खोरति ।

धोर्ऋ ५९३ गतिचातुर्ये। धोरति। त्सर ५९४ छद्मगतौ। तत्सार। अत्सारीत्। क्मर ५९५ हूर्च्छने। चक्मार। अभ्र ५९६ वभ्र ५९७ मभ्र ५९८ चर ५९९ गत्यर्थाः। चरतिर्भक्षणेऽपि। अभ्रति। आनभ्र। मा भवानभ्रीत्, अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः। ष्ठिवु ६०० निरसने 'ष्ठिवुक्लमु'-(सू. २३२०) इति दीर्घः, ष्ठीवति। अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः। तिष्ठेव। तिष्ठिवतुः। तिष्ठिवुः। टिष्ठेव। टिष्ठिवतुः। टिष्ठिवुः। 'हलि च' (सू. ३५४) इति दीर्घः, ष्ठीव्यात्। जि ६०१ जये। अयमजन्तेषु पठितुं युक्तः। जय उत्कर्षप्राप्तिः। अकर्मकोऽयम्। जयति।

**२३३१। सन्लिटोर्जेः ७।३।५७।** जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात्। जिगाय। जिग्यतुः। जिग्युः। जिगयिथ-जिगेथ। जिगाय-जिगय। जिग्यिव। जिग्यिम। जेता। जीयात्। अजैषीत्। जीव ६०२ प्राणधारणे। जिजीव। पीव ६०३ मीव ६०४ तीव ६०५ णीव ६०६ स्थौल्ये। पिपीव। मिमीव। तितीव। निनीव। क्षीवु ६०७ क्षेवु ६०८ निरसने। उर्वी ६०९ तुर्वी ६१० थुर्वी ६११ दुर्वी ६१२ धुर्वी ६१३ हिंसार्थाः। ऊर्वाञ्चकार। 'उपधायाञ्च' (सू० २२६५) इति दीर्घः। तुतूर्व। गुर्वी ६१४ उद्यमने। गूर्वति। जुगूर्व। मुर्वी ६१५ बन्धने। पुर्व ६१६ पर्व ६१७ मर्व ६१८ पूरणे। चर्व ६१९ अदने। भर्व ६२० हिंसायाम्। कर्व ६२१ खर्व ६२२ गर्व ६२३ दर्पे। अर्व ६२४ शर्व ६२५ षर्व ६२६ हिंसायाम्। आनर्व। शर्वति। सर्वति। इवि ६२७ व्याप्तौ। इन्वति। इन्वाञ्चकार। पिवि ६२८ मिवि ६२९ णिवि ६३० सेचने। तृतीयो मूर्धन्योष्मादिरित्येके। 'सेवने' इति तरङ्गिण्याम्। पिन्वति। पिपिन्व। हिवि ६३१ दिवि ६३२

धिवि ६३३ जिवि ६३४ प्रीणनार्थाः। हिन्वति। दिन्वति।

२३३२। धिन्विकृण्व्योर च ३।१।८०। अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये। 'अतो लोपः' (सू. २३०८) तस्य स्थानिवद्भावाल्लघूपधगुणो न। उप्रत्ययस्य पित्सु गुणः। धिनोति। धिनुतः। धिन्वन्ति।

२३३३। लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः। धिन्वः-धिनुवः। धिन्मः-धिनुमः। मिपि तु परत्वाद् गुणः, धिनोमि।

२३३४। उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात्। धिनु। नित्यत्वादुकारलोपात्पूर्वमाट्-धिनवाव, धिनवाम। जिन्वति इत्यादि। रिवि ६३५ रवि ६३६ धवि ६३७ गत्यर्थाः। रिण्वति। रण्वति। धन्वति। कृवि ६३८ हिंसाकरणयोश्च। चकाराद्गतौ। 'कृणोति' इत्यादि धिनोतिवत्। अयं स्वादौ च। मव ६३९ बन्धने। मवति। मेवतुः। मेवुः। अमवीत्—अमावीत्। अव ६४० रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यालिङ्गनहिंसादानभागवृद्धिषु। अवति। आव। मा भवान् अवीत्। धावु ६४१ गतिशुद्ध्योः। स्वरितेत्। धावति-धावते। दधाव-दधावे।

अथोष्मान्ता आत्मनेपदिनः। धुक्ष ६४२ धिक्ष ६४३ सन्दीपनक्लेशनजीवनेषु। धुक्षते। दुधुक्षे। धिक्षते। दिधिक्षे। वृक्ष ६४४ वरणे। वृक्षते। ववृक्षे। शिक्ष ६४५ विद्योपादाने। शिक्षते। भिक्ष ६४६ भिक्षायामलाभे लाभे च। भिक्षते। क्लेश ६४७ अव्यक्तायां वाचि। 'बाधने' इति दुर्गः। क्लेशते। चिक्लेशे। दक्ष ६४८ वृद्धौ शीघ्रार्थे च। दक्षते।

ददक्षे। दीक्ष ६४९ मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते। दिदीक्षे। ईक्ष ६५० दर्शने। ईक्षाञ्चक्रे। ईष ६५१ गतिहिंसादर्शनेषु। ईषाञ्चक्रे। भाष ६५२ व्यक्तायां वाचि। भाषते। वर्ष ६५३ स्नेहने। दन्त्योष्ठ्यादिः। ववर्षे। गेषृ ६५४ अन्विच्छायाम्। ग्लेषृ ६५५ इत्येके। अन्विच्छा अन्वेषणम्। जिगेषे। पेषृ ६५६ प्रयत्ने। पेषते। जेषृ ६५७ णेषृ ६५८ एषृ ६५९ प्रेषृ ६६० गतौ। जेषते। नेषते। एषाञ्चक्रे। पिप्रेषे। रेषृ ६६१ हेषृ ६६२ ह्रेषृ ६६३ अव्यक्ते शब्दे। आद्यो वृकशब्दे। ततो द्वौ अश्वशब्दे। रेषते। हेषते। ह्रेषते। कासृ ६६४ शब्दकुत्सायाम्। कासाञ्चक्रे। भासृ ६६५ दीप्तौ। बभासे। णासृ ६६६ रासृ ६६७ शब्दे। नासते। प्रणासते। णस ६६८ कौटिल्ये। नसते। भ्यस ६६९ भये। भ्यसते। बभ्यसे। आङः शसि ६७० इच्छायाम्। आशंसते। आशशंसे। ग्रसु ६७१ ग्लसु ६७२ अदने। जग्रसे। जग्लसे। ईह ६७३ चेष्टायाम्। ईहाञ्चक्रे। वहि ६७४ महि ६७५ वृद्धौ। वंहते। ववंहे। मंहते। अहि ६७६ गतौ। अंहते। आनंहे। गर्ह ६७७ गल्ह ६७८ कुत्सायाम्। जगर्हे। जगल्हे। बर्ह ६७९ बल्ह ६८० प्राधान्ये। ओष्ठ्यादी। वर्ह ६८१ वल्ह ६८२ परिभाषणहिंसाच्छादनेषु। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः। प्लिह ६८३ गतौ। पिप्लिहे। वेहृ ६८४ जेहृ ६८५ बाहृ ६८६ प्रयत्ने। आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी ६८७ इत्येके। दन्त्योष्ठ्यादी ६८८ इत्यपरे। जेहतिर्गत्यर्थोऽपि। बबाहे। द्राहृ ६८९ निद्राक्षये। निक्षेपे इत्येके। काशृ ६९० दीप्तौ। चकाशे। ऊह ६९१ वितर्के। ऊहाञ्चक्रे। गाहू ६९२ विलोडने। गाहते। जगाहे। जगाहिषे। जघाक्षे। जगाहिढ्वे

जगाहिध्वे—जघाढ्वे । गाहिता ।

२३३५ । ढो ढे लोपः ८।३।१३। ढस्य लोपः स्याड्ढे परे । गाढा । गाहिष्यते—घाक्ष्यते । गाहिषीष्ट घाक्षीष्ट । अगाहिष्ट—अगाढ। अघाक्षाताम् । अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । गृहू ६९३ ग्रहणे । गर्हते । जगृहे । *५४५ ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन* । जगृहिषे-जघृक्षे । जघृढ्वे । गर्हिता—गर्ढा । गर्हिष्यते-घर्क्ष्यते । गर्हिषीष्ट—घृक्षीष्ट । लुङि-अगर्हिष्ट । इडभावे

२३३६ । शल इगुपधादनिटः क्सः ३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अघृक्षत ।

२३३७ । क्सस्याचि ७।३।७२। अजादौ तङि क्सस्य लोपः स्यात् । 'अलोऽन्त्यस्य' (सू. ४२), अघृक्षाताम् । अघृक्षन्त । ग्लहू ६९४ च । ग्लहते । घुषि ६९५ कान्तिकरणे । घुंषते । जुघुंषे । केचित् घष ६९६ इत्यदुपधं पठन्ति ।

अथार्हत्यन्ताः परस्मैपदिनः । घुषिर् ६९७ अविशब्दने । विशब्दनं प्रतिज्ञानं, ततोऽन्यस्मिन्नर्थे इत्येके । 'शब्दे' इत्यन्ये पेठुः । घोषति । जुघोष । घोषिता । इरित्वादङ् वा, अघुषत्-अघोषीत् । अक्षू ६९८ व्याप्तौ ।

२३३८ । अक्षोऽन्यतरस्याम् ३।१।७५। अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति, अक्ष्णुतः, अक्ष्णुवन्ति—अक्षति, अक्षतः, अक्षन्ति । आनक्ष । आनक्षिथ—आनष्ठ । अक्षिता—अष्टा । अक्षिष्यति । 'स्कोः' (सू. ३८०) इति कलोपः । 'षढोः कः सि' (सू. २९५), अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयुः । अक्ष्यात् । ऊदित्वा-

ढ्रेट्, 'नेटि' (सू. २२६८), मा भवान् अक्षीत । अक्षिष्टाम् । अक्षिषुः । इडभावे तु-मा भवान्-आक्षीत, आष्टाम्, आक्षुः । तक्षू ६९९ त्वक्षू ७०० तनूकरणे ।

**२३३९ । तनूकरणे तक्षः ३।१।७६।** श्नुः स्याद्वा शब्विषये । तक्ष्णोति-तक्षति वा काष्ठम् । ततक्षिथ-ततष्ठ । अतक्षीत, अतक्षिष्टाम्-अताक्षीत्, अताष्टाम् । तनूकरणे किम्? वाग्भिः सन्तक्षति । भर्त्सयतीत्यर्थः । उक्ष ७०१ सेचने । उक्षाञ्चकार । रक्ष ७०२ पालने । णिक्ष ७०३ चुम्बने । प्रणिक्षति । तृक्ष ७०४ ष्टृक्ष ७०५ णक्ष ७०६ गतौ । तृक्षति । स्तृक्षति । नक्षति । वक्ष ७०७ रोषे । 'सङ्घाते' इत्येके । मृक्ष ७०८ सङ्घाते । म्रक्ष ७०९ इत्येके । तक्ष ७१० त्वचने । त्वचनं संवरणं त्वचो ग्रहणं च । पक्ष ७११ परिग्रहे इत्येके । सूर्क्ष ७१२ आदरे । सुसूर्क्ष । 'अनादरे' इति तु काचित्कोऽपपाठः । '**अवज्ञावहेलनमसूर्क्षणम्**' इत्यमरः । काक्षि ७१३ वाक्षि ७१४ माक्षि ७१५ काङ्क्षायाम् । द्राक्षि ७१६ ध्राक्षि ७१७ ध्वाक्षि ७१८ घोरवाशिते च । चूष ७१९ पाने । चुचूष । तूष ७२० तुष्टौ । पूष ७२१ वृद्धौ । मूष ७२२ स्तेये । लूष ७२३ रूष ७२४ भूषायाम् । शूष ७२५ प्रसवे । प्रसवोऽभ्यनुज्ञानम् । तालव्योष्मादिः । यूष ७२६ हिंसायाम् । जूष ७२७ च । भूष ७२८ अलङ्कारे । भूषति । ऊष ७२९ रुजायाम् । ऊषाञ्चकार । ईष ७३० उञ्छे । कष ७३१ खष ७३२ शिष ७३३ जष ७३४ झष ७३५ शष ७३६ वष ७३७ मष ७३८ रुष ७३९ रिष ७४० हिंसार्थाः । तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्त्योष्ठ्यादिः । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । क्सः, अशिक्षत । अशेक्ष्यत । जेषतुः । जझषतुः । शेषतुः । ववषतुः । मेषतुः ।

२३४० । तीषसहलुभरुषरिषः ७।२।४८। इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा स्यात् । रोषिता-रोष्टा । रोषिष्यति । रेषिता-रेष्टा । रेषिष्यति । भष ७४१ भर्त्सने । इह भर्त्सनं श्वरवः । भषति । बभाष । उष ७४२ दाहे । ओषति ।

२३४१ । उषविदजागृभ्योऽन्यतरस्याम् ३।१।३८। एभ्यो लिट्याम्वा स्यात् । ओषाञ्चकार । उवोष । ऊषतुः । उवोषिथ । जिषु ७४३ विषु ७४४ मिषु ७४५ सेचने । जिजेष । क्रादिनियमादिट्, विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । पुष ७४६ पुष्टौ । पोषति । पोषिता । पोषिष्यति । अपोषीत्, अनिट्केषु 'पुष्य' इति श्यना निर्देशादयं सेट्, अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् । श्रिषु ७४७ श्लिषु ७४८ प्रुषु ७४९ प्लुषु ७५० दाहे । श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । श्लेषिता । अयमपि सेट्, अनिट्सु दैवादिकस्यैव ग्रहणम् इति कैयटादयः । यत्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तं, तत्स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्चोपेक्ष्यम् । पुप्रोष । पुप्लोष । पृषु ७५१ वृषु ७५२ मृषु ७५३ सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । घृषु ७५४ सङ्घर्षे । हृषु ७५५ अलीके । तुस ७५६ ह्रस ७५७ ह्लस ७५८ रस ७५९ शब्दे । तुतोस । जह्रास । जह्लास । ररास । लस ७६० श्लेषणक्रीडनयोः । घस्लृ ७६१ अदने । अयं न सार्वत्रिकः, 'लिट्यन्यतरस्याम्' ( सू. २४२६ ) इत्यदेर्घस्लादेशविधानात् । ततश्च यत्र लिङ्गं वचनं वाऽस्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्मरचि तु विशिष्योपादानम् । घसति । घस्ता ।

२३४२ । सः स्यार्धधातुके ७।४।४९। सस्य तः स्यात्सादावार्धधातुके । घत्स्यति । घसतु । अघसत् । घसेत् । लिङाद्यभावादाशिष्यस्याप्रयोगः ।

२३४३ । पुषादिद्युताद्य्लृदितः परस्मैपदेषु ३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अघसत् । जर्ज ७६२ चर्च ७६३ झर्झ ७६४ परिभाषणहिंसातर्जनेषु । पिसृ ७६५ पेसृ ७६६ गतौ । पिपिसतुः । पिपेसतुः । हसे ७६७ हसने । एदित्त्वान्न वृद्धिः, अहसीत् । णिश ७६८ समाधौ । तालव्योष्मान्तः । प्रणेशति । मिश ७६९ मश ७७० शब्दे रोषकृते च । तालव्योष्मान्तौ । शव ७७१ गतौ । दन्त्योष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत्-अशावीत् । शश ७७२ प्लुतगतौ । तालव्योष्माद्यन्तः । शशाश । शेशतुः । शेशुः । शेशिथ । शसु ७७३ हिंसायाम् । दन्त्योष्मान्तः । 'नशसदद' ( सू. २२६३ ) इत्येत्वं न, शशसतुः, शशसुः, शशसिथ । शंसु ७७४ स्तुतौ अयं दुर्गतावपीति दुर्गः । **'नृशंसो घातुकः क्रूरः' इत्यमरः ।** शशंस । आशिषि नलोपः, शस्यात् । चह ७७५ परिकल्कने । कल्कनं शाठ्यम् । अचहीत् । मह ७७६ पूजायाम् । अमहीत् । रह ७७७ त्यागे । रहि ७७८ गतौ । रंहति । रंह्यात् । दृह ७७९ दृहि ७८० वृह ७८१ वृहि ७८२ वृद्धौ । दर्हति । ददर्ह । ददृहतुः । दृंहति । वर्हति । वृंहति । 'वृहि' शब्दे च । 'वृंहितं करिगर्जितम्' इत्यमरः । वृहिर् ७८३ इत्येके । अवृहत्-अवर्हीत् । तुहिर् ७८४ दुहिर् ७८५ उहिर् ७८६ अर्दने । तोहति । तुतोह । अतुहत्-अतोहीत् । दोहति । अदुहत्—अदोहीत् । अनिट्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति । ओहति । उवोह । ऊहतुः । ओहिता । मा भवान् उहत् । औहीत् । अर्ह ७८७

पूजायाम् । आनर्हे । **अथ कृपू पर्यन्ता अनुदात्तेतः ।** द्युत ७८८ दीप्तौ । द्योतते ।

**२३४४ । द्युतिस्वाप्योः सम्प्रसारणम् ७।४।६७ ।** अनयोरभ्यासस्य सम्प्रसारणं स्यात् । दिद्युते । दिद्युताते । द्योतिता ।

**२३४५ । द्युद्भ्यो लुङि १।३।९१ ।** द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । 'पुषादि' (सू, २३४३) सूत्रेण परस्मैपदे अङ्, **अद्युतत्**-अद्योतिष्ट । श्विता ७८९ । वर्णे । श्वेतते । शिश्विते । अश्वितत्-**अश्वे**तिष्ट । ञिमिदा ७९० स्नेहने । मेदते ।

**२३४६ । मिदेर्गुणः ७।३।८२ ।** मिदेरिको गुणः स्यादित्संज्ञकशकारादौ प्रत्यये । एशः आदिशित्त्वाभावान्नानेन गुणः,मिमिदे । **अमि**दत्-अमेदिष्ट । ञिष्विदा ७९१ स्नेहनमोचनयोः । 'मोहनयोः' इत्येके । स्वेदते । सिष्विदे । अस्विदत्-अस्वेदिष्ट । ञिक्ष्विदा ७९२ च इत्येके । अक्ष्विदत् । अक्ष्वेदिष्ट । रुच ७९३ दीप्तावभिप्रीतौ च । रोचते सूर्यः । हरये रोचते भक्तिः । अरुचत्-अरोचिष्ट । घुट ७९४ परिवर्तने । घोटते । जुघुटे । अघुटत्-अघोटिष्ट । रुट ७९५ लुट ७९६ लुठ ७९७ प्रतिघाते । अरुटत्-अरोटिष्ट । शुभ ७९८ दीप्तौ । क्षुभ ७९९ सञ्चलने । णभ ८०० तुभ ८०१ हिंसायाम् । आद्योऽभावेऽपि । **नभन्तामन्यके समे' । मा भूवन्नन्यके सर्वे' इति निरुक्तम् ।** अनभत्-अनभिष्ट । अतुभत्-अतोभिष्ट । इमौ दिवादी क्रयादी च । स्रंशु ८०२ ध्वंसु ८०३ भ्रंसु ८०४ अवस्रंसने । ध्वंसु गतौ च । अङि न लोपः, अस्रसत्-अस्रंसिष्ट । **'नास्रसत्करिणां ग्रैवम्' इति रघुकाव्ये ।** भ्रंशु ८०५ इत्यपि केचित्पेठुः । अत्र तृतीय एव तालव्यान्त इत्यन्ये । 'भृशु भ्रंशु अधःपतने' इति दिवादौ । स्रम्भु ८०६ विश्वासे । अस्रभत्-अस्रम्भिष्ट ।

दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः। वृतु ८०७ वर्तने। वर्तते। ववृते।

२३४७। वृद्भ्यः स्यसनोः १।३।९२। वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च।

२३४८। न वृद्भ्यश्चतुर्भ्यः ७।२।५९। एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वर्त्स्यति—वर्तिष्यते। अवृतत्-अवर्तिष्ट। अवर्त्स्यत्—अवर्तिष्यत। वृधु ८०८ वृद्धौ। शृधु ८०९ शब्दकुत्सायाम्। इमौ वृतुवत्। स्यन्दू ८१० प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे-सस्यन्त्से। सस्यन्दिध्वे-सस्यन्द्ध्वे। स्यन्दिता-स्यन्ता। 'वृद्भ्यः स्यसनोः' (सू. २३४७) इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यात् 'न वृद्भ्यः–' (सू. २३४८) इति निषेधः, स्यन्त्स्यति-स्यन्दिष्यते-स्यन्त्स्यते। स्यन्दिषीष्ट—स्यन्त्सीष्ट। 'द्युद्भ्यो लुङि' (सू, २३४५) इति परस्मैपदपक्षे अङ्, नलोपः, अस्यदत्-अस्यन्दिष्ट-अस्यन्त। अस्यन्त्साताम्। अस्यन्त्सत। अस्यन्त्स्यत्—अस्यन्दिष्यत—अस्यन्त्स्यत।

२३४९। अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ८।३।७२। एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते-अनुस्यन्दते वा जलम्। 'अप्राणिषु' किम्? अनुस्यन्दते हस्ती। 'अप्राणिषु' इति पर्युदासात् 'मत्स्योदके अनुष्यन्देते' इत्यत्रापि पक्षे षत्वं भवत्येव। 'प्राणिषु न' इत्युक्तौ तु न स्यात्। कृपू ८११ सामर्थ्ये।

२३५०। कृपो रो लः ८।२।१८। 'कृप उः' इति छेदः। 'कृप' इति लुप्तषष्ठीकम्। तच्चावर्तते। कृपो यो रेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात्।

कल्पते । चक्लृपे । चक्लृपिषे—चक्लृप्से । इत्यादि स्यन्दिवत् ।

**२३५१ । लुटि च क्लृपः १।३।९३।** लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् ।

**२३५२ । तासि च क्लृपः ७।२।६०।** क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्न स्यात्तङानयोरभावे । कल्प्तासि । कल्प्तास्थः—कल्पितासे-कल्प्तासे । कल्प्स्यति । कल्पिष्यते-कल्प्स्यते-कल्पिषीष्ट-क्लृप्सीष्ट । अक्लृपत्-अकल्पिष्ट-अक्लृप्त । अकल्प्स्यत्-अकल्पिष्यत-अकल्प्स्यत । वृत् । वृत्तः सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः । **अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च ।** घट ८१२ चेष्टायाम् । घटते । जघटे । 'घटादयो मितः' इति वक्ष्यमाणेन मित्संज्ञा । तत्फलन्तु णौ 'मितां ह्रस्वः' ( सू. २५६८ ) इति 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (सू. २७६२) इति च वक्ष्यते । घटयति । विघटयति । कथं तर्हि 'कमलवनोद्घाटनं कुर्वते ये' ।

**'प्रविघाटयिता समुत्पतन्हरिदश्वः कमलाकरानिव'** ।

इत्यादि ? श्रृणु, 'घट सङ्घाते' इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम् , **'नान्ये मितोऽहेतौ' (ग)** इति निषेधात् । **'अहेतौ स्वार्थे णिचि' (ग)** ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः । व्यथ ८१३ भयसञ्चलनयोः । व्यथते ।

**२३५३ । व्यथो लिटि ७।३।६८।** व्यथोऽभ्यासस्य सम्प्रसारणं स्याल्लिटि । हलादिशेषापवादः । थस्य हलादिशेषेण निवृत्तिः । विव्यथे । प्रथ ८१४ प्रख्याने । पप्रथे । प्रस ८१५ विस्तारे । पप्रसे । म्रद ८१६ मर्दने । स्खद ८१७ स्खदने । स्खदनं विद्रावणम् । क्षजि

८१८ गतिदानयोः। मित्त्वसामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलोः—' (सू. २७६२) इति दीर्घविकल्पः, अक्षञ्जि—अक्षाञ्जि, क्षञ्जं क्षञ्जम्—क्षाञ्जं-क्षाञ्जम्। दक्ष ८१९ गतिहिंसनयोः। योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः। क्रप ८२० कृपायां गतौ च। कदि ८२१ क्रदि ८२२ क्लदि ८२३ वैक्लव्ये। वैकल्ये इत्येके। त्रयोऽप्यनिदितः ८२४ इति नन्दी। इदितः इति स्वामी। कदिक्रदी इदितौ, क्रद ८२५ क्लद ८२६ इति चानिदितौ इति मैत्रेयः। कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च। ञित्वरा ८२७ सम्भ्रमे। घटादयः षितः' (ग)। षित्त्वादङ् कृत्सु वक्ष्यते।

**अथ फणान्ताः परस्मैपदिनः**। ज्वर ८२८ रोगे। ज्वरति। जज्वार। गड ८२९ सेचने। गडति। जगाड। हेड ८३० वेष्टने, 'हेडृ अनादरे' इत्यात्मनेपदिषु गतः। स एवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम्। हेडति। जिहेड। हिडयति। अहिडि-अहीडि। अनादरे तु-हेडयति। वट ८३१ भट ८३२ परिभाषणे। 'वट वेष्टने' (धा. ३०९) 'भट भृतौ' ( धा. ३१६ ) इति पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः। णट ८३३ नृत्तौ। इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वं पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः। वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्तं नृत्यं चार्थः। यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ 'णठ नतौ' इति पठन्ति। गतौ इत्यन्ये। णोपदेशपर्युदासवाक्ये भाष्यकृता 'नाटि'इति दीर्घपाठाद्घटादिर्णोपदेश एव। ष्टक ८३४

प्रतीघाते । स्तकति । चक ८३५ तृप्तौ । तृप्तिप्रतीघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः । आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम् । कखे ८३६ हसने । एदित्त्वान्न वृद्धिः, अकखीत् । रगे ८३७ शङ्कायाम् । लगे ८३८ सङ्गे । ह्नगे ८३९ ह्लगे ८४० षगे ८४१ ष्टगे ८४२ संवरणे । कगे ८४३ नोच्यते । 'अस्यायमर्थः' इति विशिष्य नोच्यते, क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये । अक ८४४ अग ८४५ कुटिलायां गतौ । कण ८४६ रण ८४७ गतौ । चकाण । रराण । चण ८४८ शण ८४९ श्रण ८५० दाने च । शण गतौ इत्यन्ये । श्रथ ८५१ श्लथ ८५२ क्नथ ८५३ क्लथ ८५४ हिंसार्थाः । 'जासिनिप्रहण'—(सू. ६१८) इति सूत्रे 'क्राथ' इति मित्त्वेऽपि वृद्धिर्निपात्यते । क्राथयति । मित्त्वन्तु निपातनात्परत्वात् 'चिण्णमुलोः'—(सू. २७६२) इति दीर्घे चरितार्थम् । अक्रथि—अक्राथि । क्रथं क्रथम्—क्राथं क्राथम् । वन ८५५ च । हिंसायाम् इति शेषः । वनु ८५६ च नोच्यते । वनु इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः, उदित्करणसामर्थ्यात् । तेन क्रियासामान्ये 'वनति' इत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते । ज्वल ८५७ दीप्तौ । णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते । प्रज्वलयति । ह्वल ८५८ ह्मल ८५९ चलने । प्रह्वलयति । प्रह्मलयति । स्मृ ८६० आध्याने । चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । दृ ८६१ भये । 'दृ विदारणे' इति क्र्यादेरयं मित्त्वार्थोऽनुवादः । दृणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । 'धात्वन्तरमेवेदम्' इति मते तु 'दरति' इत्यादि केचिद् घटादौ 'अत्स्मृदृत्वर'-( सू. २५६६ ) इति सूत्रे च 'द' इति दीर्घस्थाने ह्रस्वं

पठन्ति। तन्न इति माधवः। नॄ ८६२ नये। क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र नारयति। श्रा ८६३ पाके 'श्रै' इति कृतात्वस्य 'श्रा इत्यादादिकस्य च सामान्येनानुकरणम्। 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' (प. ९१) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (प. ११४) इति परिभाषाभ्याम्। श्रपयति। विक्लेदयति इत्यर्थः। पाकादन्यत्र श्रापयति। स्वेदयति इत्यर्थः। मारणतोषणनिशामनेषु ज्ञा ८६४। निशामनं चाक्षुषज्ञानम् इति माधवः। ज्ञापनमात्रम् इत्यन्ये। 'निशानेषु' इति पाठान्तरम्। निशानं तीक्ष्णीकरणम्। एष्वेवार्थेषु जानातिर्मित्। 'ज्ञप मिच्च' इति चुरादौ। ज्ञापनं मारणादिकं च तस्यार्थः। कथं 'विज्ञापना भर्तृषु सिद्धिमेति' इति तज्ज्ञापयत्याचार्यः इति च? शृणु, माधवमते अचाक्षुषज्ञाने मित्त्वाभावात्। 'ज्ञापनमात्रे' मित्त्वम् इति मते तु 'ज्ञा नियोगे' इति चौरादिकस्य, धातूनामनेकार्थत्वात्। 'निशानेषु' इति पठतां हरदत्तादीनां मते तु न काऽप्यनुपपत्तिः। कम्पने चलिः ८६५। 'चल कम्पने' इति ज्वलादिः। चलयति शाखाम्। कम्पनादन्यत्र तु—शीलं चालयति। अन्यथा करोतीत्यर्थः। 'हरतीत्यर्थः' इति स्वामी। सूत्रं चालयति। क्षिपति इत्यर्थः। छदिर् ८६६ ऊर्जने। 'छद अपवारणे' इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः। अनेकार्थत्वादूर्जेरर्थे वृत्तिः। छदन्तं प्रयुङ्क्ते छदयति। 'बलवन्तं प्राणवन्तं वा करोति' इत्यर्थः। अन्यत्र छादयति। अपवारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थे णिचि तु छादयति 'बलीभवति, प्राणीभवति अपवारयति वा' इत्यर्थः। जिह्वोन्मथने लडिः ८६७। 'लड विलासे' इति पठितस्य मित्त्वार्थोऽनुवादः। उन्मथनं क्षोभणम्। जिह्वाशब्देन षष्ठो-

तत्पुरुषः । लडयति जिह्वाम् । तृतीयातत्पुरुषो वा । लडयति जिह्वया । अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते । समाहारद्वन्द्वोऽयम् । लडयति शत्रुम् । लडयति दधि । अन्यत्र लाडयति पुत्रम् । मदी ८६८ हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । दैवादिकस्य मित्त्वार्थोऽयमनुवादः । 'मदयति हर्षयति ग्लेपयति वा' इत्यर्थः । अन्यत्र मादयति । 'चित्तविकारमुत्पादयति' इत्यर्थः । ध्वन ८६९ शब्दे । भाव्ययं मित्त्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । 'अस्पष्टाक्षरमुच्चारयति' इत्यर्थः । अत्र भोजः–'दलि ८७० वलि ८७१ स्खलि ८७२ रणि ध्वनि त्रपि ८७३ क्षपयश्च ८७४' इति पपाठ । तत्र 'ध्वनिरणी' उदाहृतौ । 'दल विशरणे' 'वल संवरणे' 'स्खल सञ्चलने' 'त्रपूष् लज्जायाम्' इति गताः । तेषां णौ दलयति । वलयति । स्खलयति । त्रपयति । 'क्षै क्षये' इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः । क्षपयति । स्वन ८७५ अवतंसने । 'शब्दे' इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र स्वानयति । **'घटादयो मितः' (ग.)** । मित्संज्ञा इत्यर्थः । **'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च (ग.)** । 'मितः' इत्यनुवर्तते । 'जॄष्' इति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु जारयति । केचित्तु 'जनी जॄष्णसु—' इति पठित्वा 'ष्णसु निरसने' इति दैवादिकमुदाहरन्ति । **'ज्वलह्वलह्मलनमामनुपसर्गाद्वा'** (ग.)। एषां मित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति–ज्वालयति । उपसृष्टे तु नित्यं मित्त्वम्, प्रज्वलयति । कथं तर्हि 'प्रज्वालयति' 'उन्नामयति' इति ? घञन्तात् **'तत्करोति—'** (ग.) इति णौ । कथं 'संक्रामयति' इति ? 'मितां ह्रस्वः' (सू. २५६८) इति सूत्रे 'वा चित्तविरागे' (सू. २३०५) इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत् ।

एतेन **'रजो विश्रामयन् राज्ञां' 'धुर्यान्विश्रामयेति सः'** इत्यादि व्याख्यातम्। **'ग्लास्नावनुवमाञ्च'** ( ग )। अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा। **'न कम्यमिचमाम्'** ( ग. )। अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति। **शमो ८७६ दर्शने** ( ग. )। शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु **'प्रणयिनो निशमय्य वधूकथाः'** कथं तर्हि—

**'निशमय्य तदुत्पत्तिं विस्तराद् गदतो मम'** इति ?

'शम आलोचने' इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः। शाम्यतिवत्। **'यमो ८७७ परिवेषणे'** **(ग.)**। यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति व्यापारयति वेत्यर्थः। परिवेषणे तु 'यमयति ब्राह्मणान्'। भोजयतीत्यर्थः। 'पर्यवसितं नियमयन्' इत्यादि तु नियमवच्छब्दात् 'तत्करोति' ( ग ) इति णौ बोद्धयम्। **'स्खदिर् ८७८ अवपरिभ्यां च'** ( ग. )। मिन्न इत्येव। अवस्खादयति। परिस्खादयति। 'अपावपरिभ्यः' इति न्यासकारः। स्वामी तु **'न कमि'** ( ग. ) इति नञमुत्तरत्रिसूत्र्यामननुवर्त्य **'शमः अदर्शने'** इति चिच्छेद। यमस्तु 'अपरिवेषणे' मित्त्वमाह। तन्मते 'पर्यवसितं नियमयन्' इत्यादि सम्यगेव। 'उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्य' इति नियमात् 'प्रस्खादयति' इत्याह। तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः। इदञ्च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम्। फण ८७९ गतौ। 'न' इति निवृत्तम्, असम्भवात्। निषेधात्पूर्वमसौ न पठितः, फणादिकार्यानुरोधात्।

**२३५४। फणां च सप्तानाम् ६।४।१२५।** एषां वा एत्वाभ्या-

सलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । फणयति । 'वृत्' । घटादिः सगाप्तः । फणेः प्रागेव वृदित्येके । तन्मते 'फणयति' इत्येव । राजृ ८८० दीप्तौ । स्वरितेत् । राजति-राजते । रेजतुः-रराजतुः । रेजे-रराजे । 'अतः' इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । टुभ्राजृ ८८१ टुभ्राशृ ८८२ टुभ्लाशृ ८८३ दीप्तौ । अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु व्रश्चादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणम् । भ्रेजे-बभ्राजे । 'वा भ्राश-' ( सू. २३२१ ) इति श्यन्वा, भ्राश्यते-भ्राशते । भ्रेशे-बभ्राशे । भ्लाश्यते-भ्लाशते । भ्लेशे-बभ्लाशे । द्वावपीमौ तालव्यान्तौ । स्यमु ८८४ स्वन ८८५ ध्वन ८८६ शब्दे । **स्यमादयः ज्वरत्यन्ताः परस्मैपदिनः ।** स्येमतुः-सस्यमतुः । अस्यमीत् । स्वेनतुः । सस्वनतुः । सस्वनुः । अस्वनीत्-अस्वानीत् । विष्वणति । अवष्वणति, सशब्दं भुङ्क्ते इत्यर्थः । 'वेश्च स्वनः-' ( सू. २२७४ ) इति षत्वम् । फणादयो गताः । दध्वनतुः । षम ८८७ ष्टम ८८८ अवैकल्ये । ससाम । तस्ताम । ज्वल ८८९ दीप्तौ । (१)अज्वालीत् । चल ८९० कम्पने । जल ८९१ घातने । घातनं तैक्ष्ण्यम् । टल ८९२ ट्वल ८९३ वैक्लव्ये । ष्ठल ८९४ स्थाने । हल ८९५ विलेखने । णल ८९६ गन्धे । 'बन्धने' इत्येके । पल ८९७ गतौ । पलति । बल ८९८ प्राणने धान्यावरोधने च । बलति । बेलतुः । बेलुः । पुल ८९९ महत्त्वे । पोलति । कुल ९०० संस्त्याने बन्धुषु च । संस्त्यानं सङ्घातः । बन्धुशब्देन तद्व्यापारो गृह्यते ।

---

( १ ) 'अतो ल्रान्तस्य' ( सू. २३३० ) इति नित्यवृद्धिः ।

कोलति । चुकोल । शल ९०१ हुल ९०२ पत्लृ ९०३ गतौ । शशाल । जुहोल । पपात । पेततुः पतिता ।

२३५५ । पतः पुम् ७।४।१९। अङि परे । अपप्तत् । 'नेर्गद—' (सू. २२८५) इति णत्वम् , प्रण्यपप्तत् । क्वथे ९०४ निष्पाके । क्वथति । चक्वाथ । अक्वथीत् । पथे ९०५ गतौ । अपथीत् । मथे ९०६ विलोडने । मेथतुः । अमथीत् । टुवम् ९०७ उद्गिरणे । 'इहैव निपातनात् ऋत इत्वम्' इति सुधाकरः । ववाम । ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु 'वेमतुः' इत्याद्यप्युदाहृतम् , तद्भाष्यादौ न दृष्टम् । भ्रमु ९०८ चलने । 'वा भ्राश-' (सू. २३२१) इति श्यन्वा । भ्रम्यति-भ्रमति । 'भ्राम्यति' इति तु दिवादौ वक्ष्यते ।

२३५६ । वा जॄभ्रमुत्रसाम् ६।४।१२४। एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः-बभ्रमतुः । अभ्रमीत् । क्षर ९०९ सञ्चलने । अक्षारीत् । अथ द्वावनुदात्तेतौ । षह ९१० मर्षणे । 'परिनिविभ्यः-' (सू. २२७५) इति षत्वम् । परिषहते । सेहे । सहिता । 'तीषसह'-(सू. १३४०) इति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः ।

२३५७ । सहिवहोरोदवर्णस्य ६।३।११२। अनयोरवर्णस्य ओत्स्याड्ढलोपे सति ।

२३५८ । सोढः ८।३।११५। सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा ।

२३५९ । सिवादीनां वाऽड्व्यवायेऽपि ८।३।७१। परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यषहत । पर्यसहत । रमु ९११ क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त ।

अथ कसन्ताः परस्मैपदिनः । षद्लृ ९१२ विशरणगत्यवसादनेषु ।

२३६० । **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** ७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ—ससत्थ । सत्ता । सत्स्यति । लृदित्वादङ्, असदत् । 'सदिरप्रतेः' ( सू० २२७१ ) निषीदति । न्यषीदत् ।

२३६१ । **सदेः परस्य लिटि** ८।३।११८। सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । निषेदतुः । शद्लृ ९१३ शातने । विशीर्णतायामयम् । शातनं तु विषयतया निर्दिश्यते ।

२३६२ । **शदेः शितः** १।३।६०। शिद्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद । शेदतुः । शेदिथ—शशत्थ । शत्ता । अशदत् । क्रुश ९१४ आह्वाने रोदने च । क्रोशति । क्रोष्टा । च्लेः क्सः, अक्रुक्षत । कुच ९१५ सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । बुध ९१६ अवगमने । बोधति । बोधिता । बोधिष्यति । रुह ९१७ बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् । कस ९१८ गतौ । अकासीत् । अकसीत् । वृत् । **ज्वलादिगणः समाप्तः ।**

**अथ गूहत्यन्ताः स्वरितेतः**। हिक्क ९१९ अव्यक्ते शब्दे । हिक्कति-हिक्कते । अन्चु ९२० गतौ याचने च । अञ्चति–अञ्चते । 'अचु' ९२१ इत्येके । 'अचि' ९२२ इत्यपरे । टुयाचृ ९२३ याच्ञायाम् । याचति—याचते । रेटृ ९२४ परिभाषणे । रेटति–रेटते । चते ९२५ चदे ९२६ याचने । चचात–चेते । अचतीत् । चचाद-चेदे । अचदीत् । प्रोथृ ९२७ पर्याप्तौ । पुप्रोथ । पुप्रोथे । मिदृ ९२८ मेदृ ९२९ मेधाहिंसनयोः । मिमेद–

मिमिदे, मिमेदे। 'थान्ताविमौ' ९३०, ९३१ इति स्वामी। मिमेथ। 'धान्तौ' ९३२, ९३३ इति न्यासः। मेधृ ९३४ सङ्गमे च। मेधति। मिमेधे। णिदृ ९३५ णेदृ ९३६ कुत्सासन्निकर्षयोः। निनेद। निनिदतुः। निनेदे। शृधु ९३७ मृधु ९३८ उन्दने। उन्दनं क्लेदनम्। शर्धति—शर्धते। शर्धिता। मर्धति—मर्धते। बुधिर् ९३९ अवबोधने। बोधति बोधते। इरित्वादङ् वा, अबुधत्—अबोधीत्—अबोधिष्ट। 'दीपजन-' ( सू० २३२८ ) इचि चिण्तु न भवति, पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात्। उबुन्दिर् ९४० निशामने। निशामनं ज्ञानम्। बुबुन्दे। अबुदत्—अबुन्दीत्। वेणृ ९४१ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वेणति-वेणते नान्तोऽप्ययम्। खनु ९४२ अवदारणे। खनति—खनते।

२३६३। **गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८।** एषामुपधाया लोपः स्यादजादौ क्ङिति,न त्वङि। चख्नतुः। 'ये विभाषा' (सू०२३२१) खायात् खन्यात्। चीवृ ९४३ आदानसंवरणयोः। चिचीव चिचीवे। चायृ ९४४ पूजानिशामनयोः। व्यय ९४५ गतौ। अव्ययीत्। दाशृ ९४६ दाने। ददाश—ददाशे। भेषृ ९४७ भये। 'गतौ' इत्येके। भेषति—भेषते। भ्रेषृ ९४८ भ्लेषृ ९४९ गतौ। अस ९५० गतिदीप्त्यादानेषु। असति—असते। आस-आसे। अयं षान्तोऽपि ९५१। स्पश ९५२ बाधनस्पर्शनयोः। स्पर्शनं ग्रन्थनम्। स्पशति—स्पशते। लष ९५३ कान्तौ। 'वा भ्राश—( सू० २३२१ ) इति श्यन्वा, लष्यति—लषति। लेषे। चष ९५४ भक्षणे। छष ९५५ हिंसायाम्। चच्छषतुः। चच्छषे। झष ९५६ आदानसंवरणयोः। भ्रक्ष ९५७ भ्लक्ष ९५८ अदने। 'भक्ष' ९५९ इति मैत्रेयः। दासृ ९६० दाने।

माहृ ९६१ माने । गुहू संवरणे ।

**२३६४ । ऊदुपधाया गोहः ६।४।८९।** गुह उपधाया ऊत्स्याद् गुणहेतावजादौ प्रत्यये । गूहति-गूहते । ऊदित्वादिड् वा, गूहिता—गोढा । गूहिष्यति—घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः, अघुक्षत् ।

**२३६५ । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३।** एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । ढत्वघत्वष्टुत्वढलोपदीर्घाः । अगूढ-अघुक्षत । 'क्सस्याचि' (सू० २३३९) इत्यन्तलोपः, अघुक्षाताम् । अघुक्षन्त । अगुह्वहि—अघुक्षावहि । अघुक्षामहि ।

**अथाजन्ता उभयपदिनः ।** श्रिञ् ९६३ सेवायाम् । श्रयति—श्रयते । शिश्रियतुः । श्रयिता । 'णिश्रि—'( सू० २३१२ ) इति चङ्, अशिश्रियत् । भृञ् ९६४ भरणे । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता ।

**२३६६ । ऋद्धनोः स्ये७।२।७०।** ऋतो हन्तेश्च स्यस्य ईट् स्यात् । भरिष्यति ।

**२३६७ । रिङ् शयग्लिङ्क्षु ७।४।२८।** शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न, भ्रियात् ।

**२३६८ । उश्च १।२।१२।** ऋवर्णात्परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ स्तः । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः ।

**२३६९ । ह्रस्वादङ्गात् ८।२।२७।** सिचो लोपः स्याज्झलि । अभृत । अभृषाताम् । अभरिष्यत् । हृञ् ९६५ हरणे । हरणं

प्रापणं, स्वीकारः, स्तेयं नाशनं च । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति । धृञ् ९६६ धारणे । धरति । अधार्षीत् । अधृत । णीञ् ९६७ प्रापणे । निनयिथ । निनेथ । निन्यिषे ।

**अथाजन्ताः परस्मैपदिनः** । धेट् ९६८ पाने । धयति ।

२३७० । **आदेच उपदेशेऽशिति** ६।१।४५। उपदेशे एजन्तस्य धातोरात्त्वं स्यात्, न तु शिति ।

२३७१ । **आत औ णलः** ७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ ।

२३७२ । **आतो लोप इटि च** ६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' ( सू० २२४३ ) इति निषेधः । द्वित्वे कृते आलोपः, दधतुः । दधुः । दधिथ–दधाथ । दधिव । दधिम । धाता ।

२३७३ । **दाधा घ्वदाप्** १।१।२०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः, दाप्दैपौ विना ।

२३७४ । **एर्लिङि** ६।४।६७। घुसंज्ञानां मास्थादीनां चैत्वं स्यादार्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः ।

२३७५ । **विभाषा धेट्श्व्योः** ३।१।४९। आभ्यां च्लेश्चङ् वा स्यात्कर्तृवाचिनि लुङि परे । 'चङि' ( सू० २३१५ ) इति द्वित्वम्, अदधत् । अदधताम् ।

२३७६ । **विभाषा घ्राधेट्शाच्छासः** २।४।७८। एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अधात् । अधाताम् । अधुः ।

२३७७ । **यमरमनमातां सक्च** ७।२।७३। एषां सक्स्यादेभ्यः सिच इट् स्यात् परस्मैपदेषु । अधासीत् । अधासिष्टाम् । अधासिषुः ।

ग्लै ९६९ म्लै ९७० हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ—जग्लाथ।

**२३७८। वाऽन्यस्य संयोगादेः** ६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्त्वं वा स्यादार्धधातुके किति लिङि। ग्लायात्—ग्लेयात्। अग्लासीत्। म्लायति। धै ९७१ न्यक्करणे। न्यक्करणं तिरस्कारः। द्रै ९७२ स्वप्ने। ध्रै ९७३ तृप्तौ। ध्यै ९७४ चिन्तायाम्। रै ९७५ शब्दे। स्त्यै ९७६ ष्ट्यै ९७७ शब्दसङ्घातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलं तु 'तिष्ट्यासति' 'अतिष्ट्यपत्' इत्यत्र षत्वम्। खै ९७८ खदने। क्षै ९७९ जै ९८० षै ९८१ क्षये। क्षायति। जजौ। ससौ। साता। 'घुमास्था—' (सू० २४६४) इत्यत्र 'विभाषा घ्राधेट्—' (सू० २३७६) इत्यत्र च स्यतेरेव ग्रहणं, न त्वस्य। तेन एत्वसिज्लुकौ न सायात्। असासीत्। कै ९८२ गै ९८३ शब्दे। गेयात्। अगासीत्। शै ९८४ श्रै ९८५ पाके। पै ९८६ ओवै ९८७ शोषणे। पायात्। अपासीत्। 'घुमास्था—'(सू० २४६४) इतीत्वं, तदपवाद 'एर्लिङि' (सू० २३७४) इत्येत्वं, 'गातिस्था—'(सू० २२२३) इति सिज्लुक् च न पारूपस्य लाक्षणिकत्वात्। ष्टै ९८८ वेष्टने। स्तायति। ष्णै ९८९ वेष्टने। 'शोभायां च' इत्येके। 'शौचे' इत्यन्ये। स्नायति। दैप् ९९० शोधने। दायति। अघुत्वादेत्त्वसिज्लुकौ न, दायात्। अदासीत्। पा ९९१। पाने। 'पाघ्राध्मा—'(सू० २३६०) इति पिबादेशः। तस्यादन्तत्वान्नोपधागुणः। पिबति। पेयात्। अपात्। घ्रा ९९२ गन्धोपादाने। जिघ्रति। घ्रायात्—घ्रेयात्। अघ्रासीत्—अघ्रात्। ध्मा ९९३ शब्दाग्निसंयोगयोः। धमति। ष्ठा ९९४ गतिनिवृत्तौ। तिष्ठति। 'स्थादिष्वभ्यासेन—' (सू० २२७७) इति षत्वम्, अधितष्ठौ।

'उपसर्गात्' ( सू० २२७० ) इति अधिष्ठाता। स्थेयात्। म्ना ९९५ अभ्यासे। मनति। दाण् ९९६ दाने। प्रणियच्छति। देयात्। अदात्। ह्वृ ९९७ कौटिल्ये। ह्वरति।

**२३७९। ऋतश्च संयोगादेर्गुणः ७।४।१०।** ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदं परत्वाण्णल्यपि भवति। रपरत्वम्, उपधावृद्धिः, जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। 'ऋद्धनोः स्ये' ( सू० २३६६ ), ह्वरिष्यति।

**२३८०। गुणोऽर्तिसंयोगाद्योः ७।४।२९।** अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वार्ष्टाम्। स्वृ ९९८ शब्दोपतापयोः। 'स्वरतिसूति'—( सू० २२७९ ) इति वेट्, सस्वरिथ-सस्वर्थ। वमयोस्तु—

**२३८१। श्र्युकः क्किति ७।२।११।** श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात्। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वात् 'ऋद्धनोः स्ये' ( सू० २३६६ ) इति नित्यमिट्, स्वरिष्यति। स्वर्यात्। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम्। स्मृ ९९९ चिन्तायाम्। ह्वृ १००० संवरणे। सृ १००१ गतौ। क्रादित्वान्नेट्, ससर्थ। ससृव। रिङ्, स्रियात्। असार्षीत्। असार्ष्टाम्।

**२३८२। सर्तिशास्त्यर्तिभ्यश्च ३।१।५६।** एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि। इह लुप्तशपा शासिना साहचर्यात् 'सर्त्यर्ती जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु 'पाघ्राध्मा' (सू० २३६०) इति शिति धौरादेशः। धावति। ऋ १००२ गतिप्रापणयोः। ऋच्छति।

२३८३। **ऋच्छत्यृताम्** ७।४।११। तौदादिक ऋच्छेः ऋधातोः ऋतां च गुणः स्याल्लिटि । णलि प्राग्वदुपधावृद्धिः, आर । आरतुः । आरुः ।

२३८४। **इडत्त्यर्तिव्ययतीनाम्** ७।२।६६। 'अद्' 'ऋ' 'व्येञ्' एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । अर्यात् । आर्षीत् । आर्ष्टाम् । गृ १००३ घृ १००४ सेचने । गरति । जगार । जगर्थ । जग्रिव । रिङ्, ग्रियात् । अगार्षीत् । ध्वृ १००५ हूर्च्छने । स्रु १००६ गतौ । सुस्रोथ । सुस्रुव । स्रूयात् । 'णिश्रि'-( सू. २३१२ ) इति चङ्, लघूपधगुणान्तरङ्गत्वादुवङ्, असुस्रुवत् । षु १००७ प्रसवैश्वर्ययोः प्रसवोऽभ्यनुज्ञानम् । सुषोथ-सुषविथ । सुषुविव । सोता ।

२३८५। **स्तुसुधूञ्भ्यः परस्मैपदेषु** ७।२।७२। एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्यां ञिद्भ्यां साहचर्यात्सुनोतेरेव ग्रहणम्' इति पक्षे असौषीत् । श्रु १००८ श्रवणे ।

२३८६। **श्रुवः शृ च** ३।१।७४। श्रुवः 'शृ' इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः । श्नोर्ङित्त्वाद्धातोर्गुणो न, शृणोति । शृणुतः ।

२३८७। **हुश्नुवोः सार्वधातुके** ६।४।८७। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । उवङोऽपवादः। शृण्वन्ति । शृणोमि । शृण्वः-शृणुवः । शृण्मः, शृणुमः । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् । ध्रु १००९ स्थैर्ये । ध्रुवति । अयं कुटादौ गत्यर्थोऽपि । दु १०१० द्रु १०११ गतौ । दुदोथ-दुदविथ । दुदुविव । दुद्रोथ । दुद्रुव । 'णिश्रि'-(सू. २३१२) इति चङ्, अदुद्रुवत् । जि १०१२ ज्रि १०१३ अभिभवे । अभिभवो न्यूनीकरणं, न्यूनीभवनं च । आद्ये सकर्मकः, शत्रू-

जयति । द्वितीये त्वकर्मकः, अध्ययनात् पराजयते । अध्येतुं ग्लायतीत्यर्थः । 'विपराभ्यां जेः' ( सू. २६८५ ) इति तङ् । 'पराजेरसोढः' ( सू. ५९० ) इत्यपादानत्वम् ।

अथ ङीङन्ता ङितः । ष्मिङ् १०१४ ईषद्धसने । स्मयते । सिष्मिये । सिष्मियिढ्वे—सिष्मियिध्वे । गुङ् १०१५ अव्यक्ते शब्दे । गवते । जुगुवे । गाङ् १०१६ गतौ । गाते । गाते । गाते । इट एत्वे कृते वृद्धिः, गै । लङ इटि-अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । 'गाङ्कुटादिभ्यः'—( सू. २४६१ ) इति सूत्रे इङादेशस्यैव गाङो ग्रहणम् , नात्वस्य, तेनाङित्वात् 'घुमास्था'–( सू. २४६२ ) इतीत्वं न, अगास्त । आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः । 'कुङ् १०१७ घुङ् १०१८ उङ् १०१९ ङुङ् १०२० शब्दे । अन्ये तु 'उङ् कुङ् खुङ् १०२१ गुङ् १०२२ धुङ् ङुङ्' इत्याहुः । कवते । चुकुवे । धवते । अवते । ऊवे । 'वार्णादाङ्गं बलीयः' ( प. ५६ ) इत्युवङ् , ततः सवर्णदीर्घः, ओता । ओष्यते । ओषीष्ट । औष्ट । ङवते । जुङुवे । ङोता । च्युङ् १०२३ ज्युङ् १०२४ प्रुङ् १०२५ प्लुङ् १०२६ गतौ । क्लुङ् १०२७ इत्येके । रुङ् १०२८ गतिरेषणयोः । रेषणं हिंसा । रुरुवे । रविताासे । धृङ् १०२९ अवध्वंसने । धरते । दध्रे । मेङ् १०३० प्रणिदाने । प्रणिदानं विनियमः प्रत्यर्पणं च । प्रणिमयते, 'नेर्गद'–( सू. २२८५ ) इति णत्वम् , तत्र 'घुप्रकृतिमाङ्' इति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात् । देङ् १०३१ रक्षणे । दयते ।

२३८८ । दयतेर्दिगि लिटि ७।४।९। 'दिग्यादेशेन द्वित्वबाधनमिष्यते' इति वृत्तिः । दिग्ये ।

२३८९ । स्थाध्वोरिच्च १।२।१७। अनयोरिदादेशः स्यात् ,

सिच्च कित्स्यात् । अदित । अदिथाः । अदिषि । श्यैङ् १०३२ गतौ । श्यायते । शश्ये । प्यैङ् १०३३ वृद्धौ । प्यायते । पप्ये । प्याता । त्रैङ् १०३४ पालने । त्रायते । तत्रे । पूङ् १०३५ पवने । पवते । पुपुवे । पविता । मूङ् १०३६ बन्धने । मवते । डीङ् १०३७ विहायसा गतौ । डयते । डिड्ये । डयिता । तॄ १०३८ प्लवनतरणयोः ।

**२३९० । ॠत इद्धातोः ७।१।१००।** ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । **॥५४६ इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन॥** । तरति । 'ॠच्छत्यॄताम्' ( सू. २३८३ ) इति गुणः, 'तॄफल—' ( सू. २३०१ ) इत्येत्वम् , तेरतुः । तेरुः ।

**२३९१ । वॄतो वा ७।२।३८।** वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यात् न तु लिटि । तरिता–तरीता । 'अलिटि' इति किम् । तेरिथ । 'हलि च' ( सू. ३५४ ) इति दीर्घः, तीर्यात् ।

**२३९२ । सिचि च परस्मैपदेषु ७।२।४०।** अत्र वॄत इटो दीर्घो न । अतारिष्टाम् ।

**अथाष्टावनुदात्तेतः ।** गुप १०३९ गोपने । तिज १०४० निशाने । मान १०४१ पूजायाम् । बध १०४२ बन्धने ।

**२३९३ । गुप्तिज्किद्भ्यः सन् ३।१।५।**

**२३९४ । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ३।१।६** सूत्रद्वयोक्तेभ्यः सन्स्यात् । मानादीनामभ्यासस्येकारस्य दीर्घश्च । **॥५४७ गुपेर्निन्दायाम्॥** । **॥५४८ तिजेः क्षमायाम्॥** । **॥५४९ कितेर्व्याधिप्रतीकारे निग्रहे, अपनयने, नाशने, संशये च॥** । **॥५५० मानेर्जिज्ञासायाम्॥** । **॥५५१ बधेश्चित्तविकारे॥** । **॥५५२ दानेरार्जवे॥** । **॥५५३ शानेर्निशाने॥** । 'सनाद्यन्ताः–' (सू. २३०४) इति धातुत्वम् ।

**२३९५। सन्यङोः ६।१।३।** सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। अभ्यासकार्यम्। गुपिप्रभृतयः किञ्चिन्ना निन्दाद्यर्थका एवानुदात्तेतो दानशानौ त्वरितेतौ। एते नित्यं सन्नन्ताः। अर्थान्तरेषु त्वननुबन्धकाश्चुरादयः। अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ्। धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम्। तेनेड्गुणौ न। जुगुप्सते। जुगुप्साञ्चक्रे। तितिक्षते। मीमांसते। भष्भावः, चर्त्वम्। बीभत्सते। रभ १०४३ राभस्ये। आरभते। आरेभे। रब्धा। रप्स्यते। डुलभष् १०४४ प्राप्तौ। लभते। ष्वञ्ज १०४५ परिष्वङ्गे।

**२३९६। दंशसञ्जस्वञ्जां शपि ६।४।२५।**

**२३९७। रञ्जेश्च ६।४।२६।** एषां शपि नलोपः। स्वजते। परिष्वजते। **'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा'** इति व्याकरणान्तरम् 'देभतुः' 'सस्वजे' इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते। 'सदेः परस्य लिटि' (सू २३६१) इति सूत्रे **॥१५४ स्वञ्जेरुपसंख्यानम्॥**। अतोऽभ्यासात्परस्य षत्वं न। परिषस्वजे-परिषस्वञ्जे। सस्वजिषे-सस्वञ्जिषे। स्वङ्क्ता। स्वङ्क्ष्यते। स्वजेत। स्वङ्क्षीष्ट। प्रत्यष्वङ्क्त, 'प्राक्सितात् –' (सू. २२७६) इति षत्वम्। परिनिविभ्यस्तु 'सिवादीनां वा–' (सू. २३५९) इति विकल्पः। एतदर्थमेव 'उपसर्गात् सुनोति'–(सू. २२७०) इत्येव सिद्धे स्तुस्वञ्ज्योः 'परिनिवि–' (सू० २२७१) इत्यत्र पुनरुपादानम्, पर्यष्वङ्क्त–पर्यस्वङ्क्त। हद १०४६ पुरीषोत्सर्गे। हदते। जहदे। हत्ता। हत्स्यते। हदेत। हत्सीष्ट। अहत्त।

**अथ परस्मैपदिनः।** ञिष्विदा १०४७ अव्यक्ते शब्दे। स्कन्दिर् १०४८ गतिशोषणयोः। चस्कन्दिथ–चस्कन्थ। स्कन्ता। स्कन्त्स्यति।

नलोपः, स्कद्यात् । इरित्वादङ् वा, अस्कदत्–अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः ।

२३९८ । **वेः स्कन्देरनिष्ठायाम्** ८।३।७३ । षत्वं वा स्यात् । कृत्येवेदम् , 'अनिष्ठायाम्' इति पर्युदासात् । विष्कन्ता विस्कन्ता । निष्ठायां तु विस्कन्नः ।

२३९९ । **परेश्च** ८।३।७४ । अस्मात्परस्य स्कन्देः सस्य षो वा । योगविभागात् 'अनिष्ठायाम्' इति न संबद्ध्यते । परिष्कन्दति-परिस्कन्दति । परिस्कन्नः –परिष्कण्णः । षत्वपक्षे णत्वम् । न च पदद्वयाश्रयतया बहिरङ्गत्वात्षत्वस्यासिद्धत्वम् , '**धातूपसर्गयोः कार्यमन्तरङ्गम्**' इत्यभ्युपगमात् । '**पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेन**' इति भाष्यम् । '**पूर्वं साधनेन**'इति मतान्तरे तु न णत्वम् । यभ १०४९ मैथुने । येभिथ–ययब्ध । यब्धा । यप्स्यति । अयाप्सीत् । णम १०५० प्रह्वत्वे शब्दे च । नेमिथ–ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् । गम्लृ १०५१ सृप्लृ १०५२ गतौ ।

२४०० । **इषुगमियमां छः** ७।३।७७। एषां छः स्याच्छिति परे । गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ–जगन्थ । गन्ता ।

२४०१ । **गमेरिट् परस्मैपदेषु** ७।२।५८। गमेः परस्य सकारादेरिट् स्यात् । गमिष्यति । लृदित्वादङ्, 'अनङि' इति पर्युदासान्नोपधालोपः, अगमत् । सर्पति । ससर्प ।

२४०२ । **अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्** ६।१।५९ । उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे । स्रप्ता-सर्प्ता । स्रप्स्यति । सर्प्स्यति । असृपत् । यम १०५३ उपरमे । यच्छति । येमिथ-ययन्थ । यन्ता । अयंसीत् । अयंसिष्टाम् । तप १०५४ सन्तापे ।

तप्ता । अताप्सीत् ।

२४०३ । **निसस्तपतावनासेवने ८।३।१०२ ।** षः स्यात् । आसेवनं पौनःपुन्यं, ततोऽन्यस्मिन्विषये । निष्टपति । त्यज १०५५ हानौ । तत्यजिथ-तत्यक्थ । त्यक्ता । अत्याक्षीत् । षञ्ज १०५६ सङ्गे । 'दंशसञ्जस्वञ्जां शपि' ( सू. २३९६ ) इति नलोपः, सजति । सङ्क्ता । दृशिर् १०५७ प्रेक्षणे । पश्यति ।

२४०४ । **विभाषा सृजिदृशोः ७।२।६५।** आभ्यां थल इड् वा ।

२४०५ । **सृजिदृशोर्झल्यमकिति ६।१।५८ ।** अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ-ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्वादङ् वा ।

२४०६ । **ऋदृशोऽङि गुणः ७।४।१६ ।** ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे—

२४०७ । **न दृशः ३।१।४७ ।** दृशश्च्लेः क्सो न । अद्राक्षीत् । दंश १०५८ दशने । दशनं दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके । तेषामन्यत्रैव तात्पर्यम् , अर्थनिर्देशस्याधुनिकत्वात् । 'दंशसञ्ज-' (सू. २३९६) इति नलोपः । दशति । ददंशिथ-ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् । कृष १०५९ विलेखने । विलेखनमाकर्षणम् । क्रष्टा-कर्ष्टा । क्रक्ष्यति-कर्क्ष्यति । ॐ १५१ **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** ॐ । अक्राक्षीत् , अक्राष्टाम्—अकार्क्षीत् , अकार्ष्टाम् । अकार्क्षुः पक्षे क्सः, अकृक्षत् । अकृक्षताम् । अकृक्षन् । दह १०६० भस्मीकरणे । देहिथ-ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । अदाग्धाम् । अधाक्षुः । मिह १०६१ सेचने । मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् । कित

१०६२ निवासे रोगापनयने च । चिकित्सिति । संशये प्रायेण विपूर्वः । 'विचिकित्सा तु संशयः' इत्यमरः । अस्यानुदात्तेत्त्वमाश्रित्य 'चिकित्सते' इत्यादि कश्चिदुदाजहार । निवासे तु-केतयति ।

दान १०६३ खण्डने । शान १०६४ तेजने । **इतो वहत्यन्ताः स्वरितेतः** । दीदांसति-दीदांसते । शीशांसति-शीशांसते । अर्थविशेषे सन् । अन्यत्र-दानयति, शानयति । डुपचष् १०६५ पाके । पचति-पचते । पेचिथ-पपक्थ । पेचे । पक्ता । पक्षीष्ट । षच १०६६ समवाये । सचति-सचते । भज १०६७ सेवायाम् । बभाज । भेजतुः । भेजुः । भेजिथ-बभक्थ । भक्ता । भक्ष्यति-भक्ष्यते । अभाक्षीत्-अभक्त । रञ्ज १०६८ रागे । नलोपः । रजति-रजते । अराङ्क्षीत्-अरङ्क्त । शप १०६९ आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप-शेपे । अशाप्सीत्-अशप्त । त्विष १०७० दीप्तौ । त्वेषति-त्वेषते । तित्विषे । त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत । अत्विक्षाताम् । यज १०७१ देवपूजासङ्गतिकरणदानेषु । यजति-यजते ।

**२४०८ । लिट्यभ्यासस्योभयेषाम्** ६।१।१७ । वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज ।

**२४०९ । वचिस्वपियजादीनां किति** ६।१।१५ । वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात्किति । पुनःप्रसङ्गविज्ञानाद् द्वित्वम्, ईजतुः । ईजुः । इयजिथ-इयष्ठ । ईजे । यष्टा । यक्ष्यति । इज्यात् । यक्षीष्ट । अयाक्षीत्-अयष्ट । डुवप् १०७२ बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि, केशान्वपति । उवाप-ऊपे । वप्ता । उप्यात्-वप्सीष्ट । प्रण्यवाप्सीत्-अवप्त । वह १०७३ प्रापणे । उवाह । उवहिथ । 'सहिवहोरोदवर्णस्य'(सू. २३५७), उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवोढ ।

अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् । वस १०७४ निवासे, परस्मैपदी । वसति । उवास ।

**२४१० । शासिवसिघसीनाञ्च ८।३।६० ।** इण्कुभ्यां परस्यैषां सस्य षः स्यात् । ऊषतुः । ऊषुः । उवसिथ–उवस्थ । वस्ता । 'सः स्यार्धधातुके' (सू. २३४२), वत्स्यति । उष्यात् अवात्सीत् । अवात्ताम् । वेञ् १०७५ तन्तुसन्ताने । वयति–वयते ।

**२४११ । वेञो वयिः २।४।४१ ।** वा स्याल्लिटि । इकार उच्चारणार्थः । उवाय ।

**२४१२ । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६ ।** एषां किति ङिति च सम्प्रसारणं स्यात् । इति यकारस्य प्राप्ते,

**२४१३ । लिटि वयो यः ६।१।३८ ।** वयो यस्य सम्प्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ।

**२४१४ । वश्चास्यान्यतरस्यां किति ६।१।३९ ।** वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयेस्तासावभावात्थलि नित्यमिट्, उवयिथ । स्थानिवद्भावेन ञित्वात्तङ् । ऊये–ऊवे । वयादेशाभावे ।

**२४१५ । वेञः ६।१।४० ।** वेञो न सम्प्रसारणं स्याल्लिटि । ववौ । ववतुः । ववुः । वविथ–ववाथ । ववे । वाता । ऊयात् । वासीष्ट । अवासीत् । व्येञ् १०७६ संवरणे । व्ययति ।

**२४१६ । न व्यो लिटि ६।१।४६ ।** व्येञ आत्वं न स्याल्लिटि । वृद्धिः । परमपि हलादिः शेषं बाधित्वा यस्य सम्प्रसारणम्, उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे

किं तेन ? विव्याय । विव्यतुः । विव्युः । 'इडत्त्यर्ति—'(सू २३८४) इति नित्यमिट्, विव्ययिथ । विव्याय-विव्यय । विव्ये । व्याता । वीयात् । व्यासीष्ट अव्यासीत्-अव्यास्त । ह्वेञ् २०७७ स्पर्धायां शब्दे च ।

**२४१७ अभ्यस्तस्य च ६।१।३३ ।** अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात् । ततो द्वित्वम् , जुहाव । जुहुवतुः । जुहुवुः । जुहोथ-जुहविथ । जुहुवे । ह्वाता । हूयात् । ह्वासीष्ट ।

**२४१८ । लिपिसिचिह्वश्च ३।१।५३ ।** एभ्यश्च्लेरङ् स्यात् ।

**२४१९ । आत्मनेपदेष्वन्यतरस्याम् ३।१।५४ ।** 'आतो लोपः' (सू २३७२). अह्वत् । अह्वताम् । अह्वन् । अह्वत-अह्वास्त । **अथ द्वौ परस्मैपदिनौ ।** वद १०७८ व्यक्तायां वाचि । अच्छं वदति । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् । 'वदव्रज—' ( सू.२२६७ ) इति वृद्धिः, अवादीत् । टुओश्वि १०७९ गतिवृद्ध्योः । श्वयति ।

**२४२० । विभाषा श्वेः ६।१।३० ।** श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः । **क्ष५५. श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः** । तेन 'लिट्यभ्यासस्य ' ( सू २४०८ ) इति सम्प्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । 'जृस्तम्भु—' ( सू. २२९१ ) इत्यङ् वा ।

**२४२१ । श्वयतेरः ७।४।१८ ।** श्वयतेरिकारस्याकारः स्यादङि । पररूपम् , अश्वत् । अश्वताम् । अश्वन् । 'विभाषा धेट्श्व्योः' ( सू० २३७५ ) इति चङ् , इयङ् , अशिश्वियत् । 'ह्म्यन्त–'( सू. २२९९ ) इति न वृद्धिः, अश्वयीत् । वृत् । यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन 'चुलुम्पति' इत्यादिसंग्रहः ।

२४२२। ऋतेरीयङ् ३।१।२९। 'ऋतिः' १०८० सौत्रस्तस्मादीयङ् स्यात्स्वार्थे। 'जुगुप्सायामयं धातुः' इति बहवः। 'कृपायां च' इत्येके। 'सनाद्यन्ताः-' (सू० २३०४) इति धातुत्वम्। ऋतीयते। ऋतीयाञ्चक्रे। आर्धधातुकविवक्षायां तु 'आयादय आर्धधातुके वा' (सू० २३०५) इतीयङभावे 'शेषात्कर्तरि-' (सू० २१५९) इति परस्मैपदम्, आनर्त। अर्तिष्यति। आर्तीत्। इति तिङन्ते भ्वादिप्रकरणम्।

## अथ तिङन्ते अदादिप्रकरणम्।

अद १०८१ भक्षणे। द्वौ परस्मैपदिनौ।

२४२३। अदिप्रभृतिभ्यः शपः २।४।७२। लुक्स्यात्। अत्ति। अत्तः। अदन्ति।

२४२४। लिट्यन्यतरस्याम् २।४।४० अदो घस्लृ वा स्याल्लिटि। जघास। 'गमहन-' (सू० २३६३) इत्युपधालोपः, तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम्, 'शासिवसि—' (सू० २४१० इति षत्वम्, जक्षतुः। जक्षुः। घसस्तासावभावात्थलि नित्यमिट्, जघसिथ। आद। आदतुः। 'इडत्यर्ति—' (सू० २३८४) इति नित्यमिट्, आदिथ। अत्ता। अत्स्यति।

२४२५। हुझल्भ्यो हेर्धिः ६।४।१००। होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अदानि।

२४२६। अदः सर्वेषाम् ७।३।१०१। अदः परस्यापृक्तसार्वधातुकस्याडागमः स्यात् सर्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यास्ताम्। अद्यासुः।

२४२७। लुङ्सनोर्घस्लृ २।४।३७। अदो घस्लृ स्याल्लुङि सनि

च । लृदित्वादङ्, अघसत् । हन १०८२ हिंसागत्योः । प्रणिहन्ति ।

**२४२८ । अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७ ।** 'अनुनासिक–' इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । **यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः ।** हतः । घ्नन्ति ।

**२४२९ । वमोर्वा ८।४।२३ ।** उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि—प्रहन्मि । प्रहण्वः-प्रहन्वः । 'हो हन्तेः–' (सू० ३५८) इति कुत्वम्, जघान । जघ्नतुः । जघ्नुः ।

**२४३० । अभ्यासाच्च ७।३।५५ ।** अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ–जघन्थ । हन्ता । 'ऋद्धनोः' ( सू० २३६८ ) इतीट्, हनिष्यति । हन्तु । हतात् । घ्नन्तु ।

**२४३१ । हन्तेर्जः ६।४।३६ ।** हौ परे । आभीयतया जस्यासिद्धत्वाद्धेर्न लुक्, जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् ।

**२४३२ । आर्धधातुके २।४।३५ ।** इत्यधिकृत्य ।

**२४३३ । हनो वध लिङि २।४।४२ ।**

**२४३४ । लुङि च २।४।४३ ।** वधादेशोऽदन्तः । 'आर्धधातुके' इति विषयसप्तमी । तेनार्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः' ( सू० २३०८ ), वध्यात् । वध्यास्ताम् । 'आर्धधातुके' किम् ? विध्यादौ हन्यात् । 'हन्तेः–' ( सू० ३५९ ) इति णत्वम्, प्रहण्यात् । अल्लोपस्य स्थानिवत्त्वात् 'अतो हलादेः' ( सू० २२८४ ) इति न

वृद्धिः, अवधीत ।

**अथ चत्वारः स्वरितेतः** । द्विष १०८३ अप्रीतौ । द्वेष्टि-द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु- द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् ।

**२४३५ । द्विषश्च ३।४।११२** । लङो झेर्जुस् वा स्यात् । अद्विषुः-अद्विषन् । अद्वेषम् । द्विष्यात्—द्विषीत, द्विक्षीष्ट । अद्विक्षत् । दुह १०८४ प्रपूरणे । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अदुग्ध । अधुग्ध्वम् । अधुक्षत्-अधुक्षत । 'लुग्वा दुह--' (सू. २३६५) इति लुक्पक्षे तथाऽध्वम्वहिपु लङ्वदपि । दिह १०८५ उपचये । प्रणिदेग्धि । लिह १०८६ आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढि । लेहानि । अलेट् । अलिक्षत् । अलिक्षत । अलीढ । अलिक्षावहि । अलिह्वहि । चक्षिङ् १०८७ व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । 'विचक्षणः प्रथयन्' । नुम् तु न, 'अन्तेदितः' इति व्याख्यानात् । ङकारस्तु **'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्** (प ९७) इति ज्ञापनार्थः । तेन 'स्फायन्निर्मोकसन्धि-' इत्यादि सिद्ध्यति । चष्टे । चक्षाते । 'आर्धधातुके' ( सू. २३७० ) इत्यधिकृत्य ।

**२४३६ । चक्षिङः ख्याञ् २।४।५४ ।**

**२४३७ । वा लिटि २।४।५५** । अत्र भाष्ये क्शादिरयमादेशः । असिद्धकाण्डे 'शस्य यो वा' इति स्थितम् । ञित्त्वात्पदद्वयम् । चख्यौ-चख्ये । चक्शौ-चक्शे । 'चयो द्वितीयाः-'(वा. ३०) इति तु न, चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता-क्शाता । ख्यास्यति, ख्यास्यते-क्शा-

स्यति, क्शास्यते । अचष्ट । अक्षीत । ख्यायात्-ख्येयात्-क्शायात्-क्शेयात् ।

२४३८ । अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२। एभ्यश्च्लेरङ् । अख्यत्-अख्यत—अक्शासीत्-अक्शास्त । ॐ५५७ वर्जने क्शाञ् नेष्टः ॐ समचक्षिष्ट । इत्यादि ।

अथ पृच्यन्ता अनुदात्तेतः । ईर १०८८ गतौ कम्पने च । ईर्ते ईराञ्चक्रे । ईरिता । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट । ईड १०८९ स्तुतौ । ईट्टे ।

२४३९ । ईशः से ७।२ ७७।

२४४० । ईडजनोर्ध्वे च ७।२।७८। ईशीडजनां 'से-' 'ध्वे-' शब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात्-ईडिष्व, ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात्—ऐड्ढ्वम् । ईश १०९० ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । आस १०९१ उपवेशने । आस्ते । 'दयायासश्च (सू. २३२४) आसाञ्चक्रे । आस्स्व । आध्वम् । आसिष्ट । आङःशासु १०९२ इच्छायाम् । आशास्ते । आशासाते । आङ् पूर्वत्वं प्रायिकम् तेन 'नमोवाकं प्रशास्महे' इति सिद्धम् । वस १०९३ आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता । कसि १०९४ गतिशासनयोः । कंस्ते । कंसाते । कंसते । अयमनिदित् इत्येके १०९५ कस्ते । तालव्यान्तोऽप्यनिदित् । १०९६ । कष्टे । कशाते । कक्षे । कड्ढ्वे । णिसि १०९७ चुम्बने । निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु 'तालव्यान्तः' इति बभ्राम । णिजि १०९८ शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता । शिजि १०९९ अव्यक्ते शब्दे । शिङ्क्ते । पिजि ११०० वर्णे । 'सम्पर्चने' इत्येके । 'उभयत्र'

इत्यन्ये । 'अवयवे' इत्यपरे । 'अव्यक्ते शब्दे' इतीतरे । पिङ्क्ते । पृजि ११०१ इत्येके । पृङ्क्ते । वृजी ११०२ वर्जने । दन्त्योष्ठ्यादिः । ईदित् । वृक्ते । वृजाते । वृक्षे । इदित् ११०३ इत्यन्ये । वृङ्क्ते । पृची ११०४ सम्पर्चने । पृक्ते ।

षूङ् ११०५ प्राणिगर्भविमोचने । सूते । सुषुवे । सुषुविषे । सोता-सविता । 'भूसुवोः-' (सू. २२२४) इति गुणनिषेधः, सुवै । सविषीष्ट । असविष्ट-असोष्ट । शीङ् ११०६ स्वप्ने ।

२४४१ । **शीङः सार्वधातुके गुणः** ७।४।२१। 'क्ङिति च' (सू. २२१७) इत्यस्यापवादः । शेते । शयाते ।

२४४२ । **शीङो रुट्** ७।१।६। शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशयिष्ट ।

**अथ स्तौत्यन्ताः परस्मैपदिनः** । ऊर्णुस्तूभयपदी । यु ११०७ मिश्रणे अमिश्रणे च ।

२४४३ । **उतो वृद्धिर्लुकि हलि** ७।३।८९। लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके, न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । युयात् । यविता । युयात् । इह 'उतो वृद्धिः-' (सू. २४४३) न, भाष्ये '**पिच्च ङिन्न, ङिच्च पिन्न**' इति व्याख्यानात् , विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत् । रु ११०८ शब्दे ।

२४४४ । **तुरुस्तुशम्यमः सार्वधातुके** ७।३।९५। एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड् वा स्यात् । 'नाभ्यस्तस्य-' (सू. २५०३) इत्यतोऽनुवृत्तिसम्भवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति-रौति । रुवीतः-रुतः । 'हलादेः' किम् ? रुवन्ति । 'तिङः' किम् ? शाम्यति ।

'सार्वधातुके' किम् ? आशिषि रूयात् । विद्ध्यादौ तु रुयात्–रुवीयात् । अरावीत् अरविष्यत् । तु ११०९ इति सौत्रो धातुर्गतिवृद्धिहिंसासु । 'अयञ्च लुग्विकरणः' इति स्मरन्ति । तवीति–तौति । तुवीतः–तुतः । तोता । तोष्यति । णु १११० स्तुतौ । नौति । नविता । टुक्षु ११११ शब्दे । क्षौति । क्षविता । क्ष्णु १११२ तेजने । क्ष्णौति । क्ष्णविता । ष्णु १११३ प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । स्नूयात् । ऊर्णुञ् १११४ आच्छादने ।

**२४४५ । ऊर्णोतेर्विभाषा ७।३।९०।** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति–ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । **ॐ५५८ ऊर्णोतेराम्नेति वाच्यम्ॐ ।**

**२४४६ । नन्द्राः संयोगादयः ६।१।३।** अचः पराः संयोगादयो नदराः द्विर्न भवन्ति । नुशब्दस्य द्वित्वम्, णत्वस्यासिद्धत्वात् । 'पूर्वत्रासिद्धीयमद्विर्वचने' ( प. १२८ ) इति त्वनित्यम्, 'उभौ साभ्यासस्य' (सू. २६०८) इति लिङ्गात् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ।

**२४४७ । विभाषोर्णोः १।२।३।** इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ–ऊर्णुनविथ । ऊर्णुविता–ऊर्णविता । ऊर्णौतु–ऊर्णोतु । ऊर्णवानि । ऊर्णवै ।

**२४४८ । गुणोऽपृक्ते ७।३।९१।** ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । इह वृद्धिर्न, 'ङिच्च पिन्न' इति भाष्यात् । ऊर्णुयात् । ऊर्णविषीष्ट–ऊर्णुविषीष्ट । और्णुवीत् । और्णुविष्टाम् ।

**२४४९ । ऊर्णोतेर्विभाषा ७।२।६।** इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णा-

विपुः। और्णवीत्। द्यु १११५ अभिगमने। द्यौति। द्योता। षु १११६ प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। सोता। असौषीत्। कु १११७ शब्दे। कोता। ष्टुञ् १११८ स्तुतौ। स्तौति-स्तवीति। स्तुतः-स्तुवीतः। स्तुते-स्तुवीते। 'स्तुसुधूञ्भ्यः-' (सू. २३८७) इतीट्, अस्तावीत्। 'प्राक्सितात्-' ( सू. २२७८ ) इति षत्वम्, अभ्यष्टौत्। 'सिवादीनां वा-' (सू. २३५९), पर्यष्टौत्-पर्यस्तौत्। ब्रूञ् १११९ व्यक्तायां वाचि।

२४५०। ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४। ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। अकार उच्चारणार्थः। आह। आहतुः। आहुः।

२४५१। आहस्थः ८।२।३५। झलि परे। चर्त्वम्, आत्थ। आहथुः।

२४५२। ब्रुव ईट् ७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात्। 'आत्थ' इत्यत्र स्थानिवद्भावात्प्राप्तोऽयं 'झलि' इति थत्वविधानान्न भवति। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। आर्धधातुकाधिकारे—

२४५३। ब्रुवो वचिः २।४।५३। उवाच। ऊचतुः। ऊचुः। उवचिथ-उवक्थ। ऊचे। वक्ता। ब्रवीतु-ब्रूतात् 'ङिच्च पिन्न' इत्यपित्वादीण्न। ब्रवाणि। ब्रवै। ब्रूयात्। उच्यात्। 'अस्यतिवक्ति-' ( सू. २३२९ ) इत्यङ्।

२४५४। वच उम् ७।४।२०। अङि परे। अवोचत्-अवोचत।

अथ शास्यन्ताः परस्मैपदिनः। इङ् त्वात्मनेपदी इण् ११२० गतौ। एति। इतः।

२४५५। इणो यण् ६।४।८१। अजादौ प्रत्यये परे। इयङोऽपवादः। यन्ति। इयाय।

२४५६ । **दीर्घं इणः किति ७।४।६९ ।** इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः । इययिथ-इयेथ । एता । इतात् । इहि । अयानि । ऐत् । ऐताम् । आयन् । इयात् । ईयात् ।

२४५७ । **एतेर्लिङि ७।७।२४ ।** उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । **'उभयत आश्रयणे नान्तादिवत्—'** ( प. ) अभीयात् । 'अणः किम्'? समेयात् । 'समीयात्' इति प्रयोगस्तु भौवादिकस्य ।

२४५८ । **इणो गा लुङि २।४।४५ ।** 'गातिस्था–' (सू. २२२५) इति सिचो लुक् । अगात् । अगाताम् । अगुः । **इङ्** ११२१ अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते ।

२४५९ । **गाङ् लिटि २।४।४९ ।** इङो गाङ् स्याल्लिटि, लावस्थायां विवक्षिते वा । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्ययै । गुणायादेशयोः कृतयोरुपसर्गस्य यण् । 'पूर्वं धातुरुपसर्गेण–' इति दर्शनेऽन्तरङ्गत्वाद् गुणात्पूर्वं सवर्णदीर्घः प्राप्तः, 'णेरध्ययने वृत्तम्' ( सू. ३०६८ ) इति निर्देशान्न भवति । अध्यैत । परत्वादियङ्, तत आट्, वृद्धिः, अध्यैयाताम् । अध्यैयि । अध्यैवहि । अधीयीत । अधीयीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट ।

२४६० । **विभाषा लुङ्लृङोः २।४।५० ।** इङो गाङ् वा स्यात् ।

२४६१ । **गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१ ।** गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ।

२४६२ । **घुमास्थागापाजहातिसां हलि ६।४।६६ ।** एषामात ईत्स्यात् हलादौ क्ङित्यार्धधातुके । अध्यगीष्ट-अध्यैष्ट । अध्यगीष्यत-अध्यैष्यत । **इक्** ११२२ स्मरणे । अयमप्यधिपूर्वः 'अधीगर्थदयेषाम्–'

( सू. ६१७ ) इति लिङ्गात् । अन्यथा हि 'इगर्थ—' इत्येव ब्रूयात् । **⁂५५९ इण्वदिक इति वक्तव्यम्⁂** । अधियन्ति । अध्यगात् । केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यण्न । तथा च भट्टिः '**ससीतयो राघवयोरधीयन्**' इति । वी ११२३ गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । 'अडागमे सत्यनेकाच्त्वाद्यण्' इति केचित् , अव्यन् । अत्र ईकारोऽपि धात्वन्तरं ११२४ प्रश्लिष्यते । एति । इतः । इयन्ति । ईयात् । ऐषीत् । या ११२५ प्रापणे । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति ।

**२४६३ । लङः शाकटायनस्यैव ३।४।१११** । आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः-अयान् । यायात् । यायाताम् । यायास्ताम् । वा ११२६ गतिगन्धनयोः । गन्धनं सूचनम् । भा ११२७ दीप्तौ । ष्णा ११२८ शौचे । श्रा ११२९ पाके । द्रा ११३० कुत्सायां गतौ । प्सा ११३१ भक्षणे । पा ११३२ रक्षणे । पायास्ताम् । अपासीत् । रा ११३३ दाने । ला ११३४ आदाने । 'द्वावपि दाने' इति चन्द्रः । दाप् ११३५ लवने । प्रणिदाति-प्रनिदाति । दायास्ताम् । अदासीत् । ख्या ११३६ प्रकथने । अयं सार्वधातुकमात्रविषयः । '**सस्थानत्वं नमः ख्यात्रे**' इति वार्तिकं तद्भाष्यञ्चेह लिङ्गम । सस्थानो जिह्वामूलीयः । स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः । '**सम्पूर्वस्य ख्यातेः प्रयोगो न**' इति न्यासकारः । प्रा ११३७ पूरणे । मा ११३८ माने । अकर्मकः । 'तनौ ममुस्तत्र न कैटभद्विषः' इति माघः । उपसर्गवशेनार्थान्तरे तु सकर्मकः '**उदरं परिमाति मुष्टिना**' । 'नेर्गद—' ( सू. २२८५ ) इत्यत्र नास्य ग्रहणम् , प्रणिमाति-प्रतिमाति ।

वच ११३९ परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । 'बहुवचनपर' इत्यन्ये । 'झिपर' इत्यपरे । वग्धि । वच्यात् । उच्यात् । अवोचत् । विद ११४० । ज्ञाने ।

२४६४ । विदो लटो वा ३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ। विदथुः । विद । वेद । विद्व । विद्म । पक्षे वेत्ति । वित्तः । इत्यादि । विवेद । विविदतुः । 'उषविद ' ( सू. २३४१ ) इत्याम्पक्षे 'वि' इत्यकारान्तनिपातनान्न लघूपधगुणः, विदाञ्चकार । वेदिता ।

२४६५ । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३।१।४१ । वेत्तेर्लोट्याम् , गुणाभावः, लोटो लुक् , लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते, इति शब्दात् ।

२४६६ । तनादिकृञ्भ्य उः ३।१।७९ । तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । तनादित्वादेन सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् । विदाङ्करोतु ।

२४६७ । अत उत्सार्वधातुके ६।४।११० । उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । 'उत्' इति तपरसामर्थ्यान्न गुणः । विदाङ्कुरुतात्-विदाङ्कुरुताम् । 'उतश्च-' (सू.२३३४) इति हेर्लुक्, आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्, विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । 'सिजभ्यस्त-' ( सू. २२२६ ) इति झेर्जुस् , अविदुः ।

२४६८ । दश्च ८।२।७५ । धातोर्दान्तस्य पदस्य सिपि परे रुः स्याद्वा । अवेः-अवेत् । अस ११४१ भुवि ।

२४६९ । श्नसोरल्लोपः ६।४।१११। श्नस्यास्तेश्चाकारस्य लोपः

स्यात्सार्वधातुके क्ङिति । स्तः । सन्ति । 'तासस्त्योः-' ( सू. २१९१ ) इति सलोपः, असि । स्थः । स्थ । अस्मि । स्वः । स्मः । आर्धधातुके ( सू. २४३२ ) इत्यधिकृत्य ।

२४७० । **अस्तेर्भूः २।४।५२** । बभूव । भविता । अस्तु । स्तात् । स्ताम् । सन्तु ।

२४७१ । **घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९** । घोरस्तेश्चैत्त्वं स्याद्धौ परेऽभ्यासलोपश्च । आभीयत्वेनैत्त्वस्यासिद्धत्वाद्धेर्धिः । 'श्नसोः' ( सू. २४६९ ) इत्यल्लोपः । एधि । तातङ्पक्षे एत्वं न, परेण तातङा बाधात्, 'सकृद्गतौ-(प. ४०) इति न्यायात्, स्तात् । स्तम् । स्त । असानि । असाव । असाम । 'अस्तिसिचः-' (सू. २२२५ ) इतीट्, आसीत् । 'श्नसोः-' (सू. २४६९ ) इत्यल्लोपस्याभीयत्वेनासिद्धत्वादाट्, आस्ताम् । आसन् । स्यात् । भूयात् । अभूत् । सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न ।

२४७२ । **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७** । उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । 'यच्परः' किम् ? अभिस्तः । मृजू ११४२ शुद्धौ ।

२४७३ । **मृजेर्वृद्धिः ७।२।११४** । मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे । ***५६० क्ङित्यजादौ वेष्यते*** । 'व्रश्च '(सू २९४) इति षः, मार्ष्टि । मृष्टः । मृजन्ति-मार्जन्ति । ममार्ज । ममार्जतुः-ममृजतुः । ममार्जिथ-ममार्ष्ठ । मार्जिता-मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत्-अमार्क्षीत् । रुदिर् २१४३ अश्रुविमोचने ।

२४७४ । **रुदादिभ्यः सार्वधातुके ७।२।७६** । 'रुद्' 'स्वप्'

'श्वस्' 'अन्' 'जक्ष' एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न, रुदिहि ।

२४७५ । रुदश्च पञ्चभ्यः ७।३।९८ । हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ।

२४७६ । अड् गार्ग्यगालवयोः ७।३।९९ । अरोदीत्-अरोदत् । अरुदिताम् । अरुदन् । अरोदीः-अरोदः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट्, रुद्यात् । अरुदत्-अरोदीत् । ञिष्वप् ११४४ शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ-सुष्वप्थ ।

२४७७ । सुविनिर्दुर्भ्यः सुपिसूतिसमाः ८।३।८८ । एभ्यः सुप्यादेः सस्य षः स्यात् । पूर्वं धातुरुपसर्गेण युज्यते । किति लिटि परत्वात् सम्प्रसारणे षत्वे च कृते द्वित्वम् । पूर्वत्रासिद्धीयमद्विर्वचने' ( प. १२८ ) । सुषुषुपतुः सुषुषुपुः । अकिति तु द्वित्वेऽभ्यासस्य सम्प्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं 'हलादिः शेषः' ( सू. २१७९ ), नित्यत्वाच्च । ततः सुपि रूपाभावान्न षः, सुसुष्वाप । सुस्वप्ता । अस्वपीत्-अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् । श्वस ११४५ प्राणने । श्वसिति । श्वसिता । अश्वसीत्-अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । 'ह्ययन्तक्षण-' ( सू. २२९९ ) इति न वृद्धिः, अश्वसीत् । अन ११४६ च । अनिति । आन । अनिता । आनीत्-आनत् ।

२४७८ । अनितेः ८।४।१९ । उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । जक्ष ११४७ भक्षहसनयोः । जक्षिति । जक्षितः ।

२४७९। अदभ्यस्तात् ७।१।४। झस्य अत्स्यात् । अन्तापवादः। जक्षति। 'सिजभ्यस्त-' (सू. २२२६) इति झेर्जुस्, अजक्षुः। अयमन्तस्स्थादिरित्युज्ज्वलदत्तो बभ्राम। रुदादयः पञ्च गताः।

जागृ ११४८ निद्राक्षये। जागर्ति। जागृतः। जाग्रति। 'उषविद-' (सू. २३३१) इत्याम्वा, जागराञ्चकार-जजागार।

२४८०। जाग्रोऽविचिण्णल्ङित्सु ७।३।८५। जगार्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च। जजागरतुः। अजागः। अजागृताम्। अभ्यस्तत्वाज्जुस्।

२४८१। जुसि च ७।३।८३। अजादौ जुसीगन्ताङ्गस्य गुणः स्यात्। आजागरुः। 'अजादौ' किम्? जागृयुः। आशिषि तु-जागर्यात्। जागर्यास्ताम्। जागर्यासुः। लुङि-अजागरीत्। 'जागृ इस्' इत्यत्र यण्प्राप्तः तं सार्वधातुकगुणो बाधते, तं सिचि वृद्धिः, तां जागर्तिगुणः, तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, 'नेटि' (सू. २२६८) इति निषिद्धा, ततः 'अतो हलादेः-' (सू. २२८४) इति बाधित्वा 'अतो ल्रान्तस्य' (सू. २३३०) इति वृद्धिः प्राप्ता, 'ह्म्यन्त-' (सू. २२९९) इति निषिद्ध्यते। तदाहुः—

गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव॥ इति।

दरिद्रा ११४९ दुर्गतौ। दरिद्राति।

२४८२। इद्दरिद्रस्य ६।४।११४। दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके। दरिद्रितः।

२४८३। श्नाभ्यस्तयोरातः ६।४।११२। अनयोरातो लोपः स्यात्क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्, दरिद्राञ्चकार।

'आत औ णलः' (सू. २३७१) इत्यत्र 'ओ' इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव ज्ञापकादाम्न इत्येके । ददरिद्रौ । ददरिद्रतुः इत्यादि । यत्तु णलि 'ददरिद्र' इति, तन्निर्मूलमेव । ॐ५६१ दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यःॐ।ॐ५६२ लुङि वाॐ। ॐ५६३ सनि ण्वुलि ल्युटि च नॐ। दरिद्रिता । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरिद्रीत् । इट्सकौ, अदरिद्रासीत् । चकासृ ११५० दीप्तौ । चकास्ति । झस्य अत्, चकासति । चकासाञ्चकार । 'धि च' (सू. २२४९) इति सलोपः, सिच एवेत्येके, चकाद्धि । 'चकाधि' इत्येव भाष्यम् ।

२४८४ । तिप्यनस्तेः ८।२।७३ । पदान्तस्य सस्य दः स्यात्तिपि, न त्वस्तेः । अचकात्-अचकाद् । अचकासुः ।

२४८५ । सिपि धातो रुर्वा ८।२।७४ । पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे (१) दः । अचकाः-अचकात् । शासु ११५१ अनुशिष्टौ । शास्ति ।

२४८६ । शास इदङ्हलोः ६।४।३४ । शास उपधाया इत्स्यादङि हलादौ क्ङिति च । 'शासिवसि-' (सू. २४१०) इति षः । शिष्टः । शासति । शशासतुः । शास्तु-शिष्टात् । शिष्टाम् । शासतु ।

२४८७ । शा हौ ६।४।३५ । शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः—अशात् । शिष्यात् । 'सर्तिशास्ति-' (सू. २३८२) इत्यङ्, अशिषत् । अशासिष्यत् ।

दीधीङ् ११५२ दीप्तिदेवनयोः । एतदादयः पञ्च धातवश्छान्दसाः । दीधीते । 'एरनेकाचः'-(सू. २७२) इति यण्, दीध्याते ।

(१) जश्त्वेनेत्यर्थः ।

२४८८। यीवर्णयोर्दीधीवेव्योः ७।४।५३। एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे। इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम्, दीध्ये। 'दीधीवेवीटाम्' (सू २१९०) इति गुणनिषेधः। दीध्याञ्चक्रे। दीधिता। दीधिष्यते। वेवीङ् ११५३ वेतिना तुल्ये। 'वी गति' (धा० ११२३) इत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः।

अथ त्रयः परस्मैपदिनः। षस ११५४ षस्ति ११५५ स्वप्ने। सस्ति। सस्तः। ससन्ति। ससास। सेसतुः। सस्तु। सधि, 'पूर्वत्रासिद्धम्' (सू.१२) इति सलोपस्यासिद्धत्वात् 'अतो हेः' (सू. २२०२) इति न लुक्। असत्। असस्ताम्। असः–असत्। सस्यात्। असासीत्–अससीत्। सन्ति। इदित्त्वान्नुमि कृते 'संस्त तस्' इति स्थिते 'स्कोः–(सू. ३८०) इति सलोपे 'झरो झरि सवर्णे' (सू. ७१) इति तकारस्य वा लोपः, सन्तः। संस्तन्ति। 'बहूनां समवाये द्वयोः संयोगसंज्ञा न' इत्याश्रित्य 'स्कोः'—(सू. ३८०) इति लोपाभावात्, संस्ति। संस्तः। संस्तन्ति–इत्येके। वश ११५६ कान्तौ। कान्तिरिच्छा। वष्टि। उष्टः। उशन्ति। वक्षि। उष्टः। उवाश। ऊशतुः। वशिता। वष्टु–उष्टात्। उड्ढि। अवट्। औष्टाम्। औशन्। अवशम्। उश्याताम्। उश्यास्ताम्। अवाशीत्–अवशीत्। 'चर्करीतं च' (ग)। यङ्लुगन्तमदादौ बोध्यम्। ह्नुङ् ११५७ अपनयने। ह्नुते। जुह्नुवे। ह्नुवीत। ह्नोषीष्ट। अह्नोष्ट।

इति तिङन्ते अदादिप्रकरणम्।

## अथ तिङन्ते जुहोत्यादिप्रकरणम्।

हु ११५८ दानादनयोः। 'आदाने च' इत्येके। 'प्रीणनेऽपि' इति भाष्यम्। दानं चेह प्रक्षेपः। स च वैधे आधारे हविषश्चेति स्वभा-

वाल्लभ्यते । हूतश्चत्वारः परस्मैपदिनः ।

२४८९ । जुहोत्यादिभ्यः श्लुः २।४।७५। शपः श्लुः स्यात् ।

२४९० । श्लौ ६।१।१० । धातोर्द्वे स्तः । जुहोति । जुहुतः । 'अद्भ्यस्तात्' (सू. २४७९) इत्यत्, 'हुश्नुवोः–' ( सू. २३८७ ) इति युण्, जुह्वति ।

२४९१ । भीह्रीभृहुवां श्लुवच्च ३।१।३९। एभ्यो लिट्याम्वा स्यात्, आमि श्लाविव कार्यञ्च । जुहवाञ्चकार-जुहाव । होता । होष्यति । जुहोतु—जुहुतात् । हेर्धिः, जुहुधि । आटि परत्वाद् गुणः, जुहवानि । परत्वात् । 'जुसि च' (सू. २४८१) इति गुणः, अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । ञिभी ११५९ भये । बिभेति ।

२४९२ । भियोऽन्यतरस्याम् ६।४।११५। इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः—बिभीतः । बिभ्यति । बिभयाञ्चकार-बिभाय । भेता । ह्री ११६० लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार—जिह्राय । पॄ ११६१ पालनपूरणयोः ।

२४९३ । अर्तिपिपर्त्योश्च ७।४।७७। अभ्यासस्येकारोऽन्तादेशः स्यात् श्लौ ।

२४९४ । उदोष्ठ्यपूर्वस्य ७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति । उत्त्वम्, रपरत्वम् 'हलि च' ( सू ३५४ ) इति दीर्घः, पिपूर्तः । पिपुरति । पपार । किति लिटि 'ॠच्छत्यॄताम्' ( सू. २३८३ ) इति गुणे प्राप्ते ।

२४९५ । शॄदॄप्रां ह्रस्वो वा ७।४।१२। एषां किति लिटि ह्रस्वो वा स्यात् । पक्षे-गुणः । पप्रतुः, पप्रुः—पपरतुः, पपरुः । परिता—परीता । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपा

रीत् । अपारिष्टाम् । 'ह्रस्वान्तोऽयम्' इति केचित् । पिपर्ति । पिपृतः । पिप्रति । पिपृयात् । आशिषि—प्रियात् । अपार्षीत् । पाणिनीयमते तु 'तं रोदसी पिपृतम्' इत्यादौ छान्दसत्वं शरणम् । डुभृञ् ११६२ धारणपोषणयोः ।

२४९६ । भृञामित् ७।४।७६। 'भृञ्' 'माङ्' 'ओहाङ्' एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । बिभृतः । बिभ्रति । बिभृध्वे । श्लुवद्भावात् द्वित्वे, बिभरामास-बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः । अबिभृताम् । अबिभरुः । बिभृयात् । भ्रियात्-भृषीष्ट । अभार्षीत्-अभृत । माङ् ११६३ माने शब्दे च ।

२४९७ । ई हल्यघोः ६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि, न तु घुसंज्ञकस्य । मिमते । 'नाभ्यस्तयोः'-( सू. २४८३ ) इत्याल्लोपः, मिमाते । मिमते । प्रण्यमास्त । ओहाङ् ११६४ गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । ओहाक् ११६५ त्यागे । परस्मैपदी । जहाति ।

२४९८ । जहातेश्च ६।४।११६। इत्स्याद्वा हलादौ क्ङिति सार्वधातुके । पक्षे ईत्वम् । जहितः-जहीतः । जहति । जहौ ।

२४९९ । आ च हौ ६।४।११७। जहातेर्हौ परे आ स्याच्चादिदीतौ । जहाहि—जहिहि—जहीहि । अजहात् । अजहुः । अजहाः ।

२५०० । लोपो यि ६।४।११८। जहातेरालोपः स्याद्यादौ सार्वधातुके । जह्यात् । 'एर्लिङि' (सू. २३७४), हेयात् । अहासीत् । डुदाञ् ११६६ दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददौ । 'घ्वसोः'—(सू. २४७१) इत्येत्त्वाभ्यासलोपौ, देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः । अदित । डुधाञ्

११६७ धारणपोषणयोः । 'दानेऽपि' इत्येके । प्रणिदधाति ।

२५०१ । दधस्तथोश्च ८।२।३८। द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । **'वचनसामर्थ्याद्‌लोपो न स्थानिवत्' इति वामनमाधवौ** । वस्तुतस्तु 'पूर्वत्रासिद्धे न स्थानिवत्' । धत्तः । दधति । धत्थः । धत्थ । दध्वः । दध्मः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ।

**अथ त्रयः स्वरितेतः** । णिजिर् ११६८ शौचपोषणयोः ।

२५०२ । **निजां त्रयाणां गुणः श्लौ** ७।४।७५। णिज्-विज्-विषामभ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । निनेज । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि ।

२५०३ । **नाभ्यस्तस्याचि पिति सार्वधातुके** ७।३।८७। लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत्-अनैक्षीत्-अनिक्त । विजिर् ११६९ पृथग्भावे । वेवेक्ति—वेविक्ते । विवेजिथ । अत्र 'विज इट्' (सू. २५३६) इति ङित्त्वं न, 'ओविजी' इत्यस्यैव तत्र ग्रहणात् । 'णिजिविजी' रुधादावपि । विष्लृ ११७० व्याप्तौ । वेवेष्टि – वेविष्टे । लृदित्त्वादङ्, अविषत् । तङि क्सः । अजादौ । 'क्सस्याचि' ( सू. २३३७ ) इत्यल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ।

**अथ आगणान्तात्परस्मैपदिनश्छान्दसाश्च** । घृ ११७१ क्षरणदीप्त्योः । 'जिघर्म्यग्निं हविषा घृतेन' । 'भृञामित्' ( सू. २४९६ ), 'बहुलं छन्दसि' (सू. ३५९९) इतीत्त्वम् । हृ ११७२ प्रसह्यकरणे । 'अयं स्रुवोऽभिजिहर्ति होमान्' । ऋ ११७३ सृ ११७४ गतौ । 'बहुलं छन्दसि' (सू. ३५९६) इत्येव सिद्धे 'अर्तिपिपर्त्योश्च (सू. २४९३) इतीत्त्वविधा-

नाद्यं भाषायामपि । 'अभ्यासस्यासवर्णे' (सू. २२९२) इतीयङ्, इयर्ति । इयृतः । इयृति । आर । आरतुः । 'इडत्त्यर्ति-( सू. २३८४ ) इति नित्यमिट्, आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति । भस ११७५ भर्त्सनदीप्त्योः । बभस्ति । 'घसिभसोर्हलि—' (सू. ३१४८) इत्युपधालोपः, 'झलो झलि' (सू. २२८१) इति सलोपः, बब्धः । बप्सति । कि ११७६ ज्ञाने । चिकेति । तुर ११७७ त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । धिष ११७८ शब्दे । दिधेष्टि । दिधिष्टः । धन ११७९ धान्ये । दधन्ति । दधन्तः । दधनति । जन ११८० जनने । जजन्ति ।

२५०४ । **जनसनखनां सञ्झलोः** ६।४।४२ । एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजान । जजन्यात्– जजायात् । जन्यात् जायात् । ग ११८१ स्तुतौ । '**देवाञ्जिगाति सुम्नयुः**' । जिगीतः । जिगति ।

इति तिङन्ते जुहोत्यादिप्रकरणम् ।

## अथ तिङन्ते दिवादिप्रकरणम् ।

दिवु ११८२ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । ऋषन्ताः परस्मैपदिनः ।

२५०५ । **दिवादिभ्यः श्यन्** ३।१।६९ । शपोऽपवादः । 'हलि च' (सू. ३४५) इति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । षिवु ११८३ तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत्–न्यसेवीत् । स्रिवु ११८४ गतिशोषणयोः । ष्ठिवु ११८५ निरसने । केचिदिहेमं न पठन्ति । ष्णुसु ११८६ अदने । 'आदाने' इत्येके । 'अदर्शने' इत्यपरे ।

सुष्णोस । ऽणसु ११८७ निरसने । स्नस्यति । सस्नास । क्नसु ११८८ ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास । व्युष ११८९ दाहे । वुव्योष । प्लुष ११९० च । नृती ११९१ गात्रविक्षेपे । नृत्यति । ननर्त ।

२५०६ । सेऽसिचि कृतचृतच्छृदतृदनृतः ७।२।५७। एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्य इट् वा स्यात् । नर्तिष्यति नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् । त्रसी ११९२ उद्वेगे । 'वा भ्राश-' (सू.२३२१) इति श्यन्वा । त्रस्यति-त्रसति । त्रेसतुः-तत्रसतुः । कुथ ११९३ पूतीभावे । पूतीभावो दौर्गन्ध्यम् । पुथ ११९४ हिंसायाम् । गुध ११९५ परिवेष्टने । क्षिप ११९६ प्रेरणे । क्षिप्यति । क्षेप्ता । पुष्प ११९७ विकसने । पुष्प्यति । पुपुष्प । तिम ११९८ ष्टिम ११९९ ष्टीम १२०० आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । व्रीड १२०१ चोदने लज्जायां च । व्रीड्यति । इष १२०२ इष्यति । षह १२०३ षुह १२०४ चक्यर्थे । चक्यर्थस्तृप्तिः, सह्यति । सुह्यति । जॄष् १२०५ झॄष् १२०६ वयोहानौ जीर्यति । जजरतुः-जेरतुः । जरिता-जरीता । जीर्येत् । जीर्यात् । 'जृस्तम्भु-'(सू.२२९३) इत्यङ्वा, 'ऋदृशोऽङि गुणः' (सू. २४०६), अजरत्-अजारीत् । अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् । षूङ् १२०७ प्राणिप्रसवे । सूयते । सुषुवे । 'स्वरतिसूति-' (सू. २२९७) इति विकल्पं बाधित्वा 'श्र्युकः किति (सू. २३८१) इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता-सविता । दूङ् १२०८ परितापे । दूयते । दीङ् १२०९ क्षये । दीयते ।

२५०७ । दीङो युडचि क्ङिति ६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् । 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ (वा ५३२) । दिदीये ।

**२५०८। मीनातिमिनोतिदीङां ल्यपि च ६।१।५०।** एषामात्वं स्याल्ल्यपि, चकारादशित्येज्निमित्ते। दाता। दास्यते। अदास्त। अदास्थाः। डीङ् १२१० विहायसा गतौ। डीयते। धीङ् १२११ आधारे। धीयते। दिध्ये। धेता। मीङ् १२१२ हिंसायाम्। हिंसा अत्र प्राणवियोगः। मीयते। रीङ् १२१३ श्रवणे। रीयते। लीङ् १२१४ श्लेषणे।

**२५०९। विभाषा लीयतेः ६।१।५१।** 'लीयतेः' इति यका निर्देशो, न तु श्यना। लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च। लेता–लाता। लेष्यते–लास्यते। 'एज्विषये' किम्? लीयते, लिल्ये। व्रीङ् १२१५ वृणोत्यर्थे। व्रीयते। विव्रिये। **'स्वादय ओदितः' (ग)** तत्फलं तु निष्ठानत्वम्। पीङ् १२१६ पाने। पीयते। माङ् १२१७ माने। मायते। ममे। ईङ् १२१८ गतौ। ईयते। अयाञ्चक्रे। प्रीङ् १२१९ प्रीतौ। सकर्मकः। प्रीयते। पिप्रिये।

**अथ परस्मैपदिनश्चत्वारः।** शो १२२० तनूकरणे।

**२५१०। ओतः श्यनि ७।३।७१।** लोपः स्याच्छ्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। 'विभाषा घ्राधेट्–' (सू. २३७६) इति सिचो वा लुक्, लुगभावे 'यमरम–' (सू. २३७७) इतीट्सकौ, अशात्। अशाताम्। अशुः। अशासीत्। अशासिष्टाम्। छो १२२१ छेदने। छ्यति। षो १२२२ अन्तकर्मणि। स्यति। ससौ। अभिष्यति। अभ्यष्यत्। अभिससौ। दो १२२३ अवखण्डने। द्यति। ददौ। प्रणिदाता। देयात्। अदात्।

**अथात्मनेपदिनः पञ्चदश।** जनी १२२४ प्रादुर्भावे।

**२५११। ज्ञाजनोर्जा ७।३।७९।** अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जज्ञाते। जज्ञिरे। जनिता। जनिष्यते। 'दीपजन–'

(सू. २३२८) इति वा चिण् ।

२५१२ । जनिवध्योश्च ७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि—अजनिष्ट । दीपी १२२५ दीप्तौ । दीप्यते । दिदीपे । अदीपि–अदीपिष्ट । पूरी १२२६ आप्यायने । पूर्यते। अपूरि–अपूरिष्ट । तूरी १२२७ गतित्वरणहिंसनयोः । तूर्यते । तुतूरे । धूरी १२२८ गूरी १२२९ हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते। जुगूरे । घूरी १२३० जूरी १२३१ हिंसावयोहान्योः । शूरी १२३२ हिंसास्तम्भनयोः । चूरी १२३३ दाहे । तप १२३४ ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा तङ्श्यनौ लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति । तप्यते । तप्ता । तप्स्यते । 'पत' १२३५ इति व्यत्यासेन पाठान्तरम् । 'द्युत द्यामानि युतःपत्यमानः' । वृतु १२३६ वरणे । वृत्यते । पक्षान्तरे वावृत्यते । 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' । इति भट्टिः ।

क्लिश १२३७ उपतापे । क्लिश्यते । क्लेशिता । काशृ १२३८ दीप्तौ । काश्यते । वाशृ १२३९ शब्दे । वाश्यते । ववाशे ।

अथ पञ्च स्वरितेतः । मृष १२४० तितिक्षायाम् । मृष्यति मृष्यते । ममर्ष–ममृषे । ईशुचिर् १२४१ पूतीभावे । पूतीभावः क्लेदः । शुच्यति–शुच्यते । शुशोच–शुशुचे । अशुचत्–अशोचीत्–अशोचिष्ट । णह १२४२ बन्धने । नह्यति–नह्यते । ननाह । नेहिथ–ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत् । रञ्ज १२४३ रागे । रज्यति–रज्यते । शप १२४४ आक्रोशे । शप्यति—शप्यते ।

अथैकादशानुदात्तेतः । पद १२४५ गतौ । पद्यते । पेदे । पत्ता । पद्येत ।पत्सीष्ट

**२५१३ । चिण् ते पदः ३।१।६०।** पदश्च्लेश्चिण्स्यात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत । खिद १२४६ दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त । विद १२४७ सत्तायाम् । विद्यते । वेत्ता । बुध १२४८ अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि—अबुद्ध । अभुत्साताम् । युध १२४९ सम्प्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं 'युध्यति' इति ? युधमिच्छतीति क्यच् । **'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्'** (प० ०८) इति वा । अनो रुध १२५० कामे । अनुरुध्यते । अण १२५१ । प्राणने । अण्यते । आणे । अणिता । 'अन' १२५२ इति दन्त्यान्तोऽयमित्येके । मन १२५३ ज्ञाने । मन्यते । मेने । मन्ता । युज १२५४ समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता । सृज १२५५ विसर्गे । अकर्मकः । **'संसृज्यते सरसिजैररुणांशुभिन्नैः ।'** ससृजिषे । स्रष्टा । स्रक्ष्यते । 'लिङ् सिचौ'—( सू. २३०० ) इति कित्त्वान्न गुणो, नापि अम्-सृक्षीष्ट । असृष्ट । असृक्षाताम् । लिश १२५६ अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ।

**अथागणान्ताः परस्मैपदिनः ।** राधः १२५७ अकर्मकाद् वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह—'वृद्धौ' इति । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यन्तं क्षमेत कः । द्रुह्यन्तमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । 'राधो हिंसायाम्' ( सू. २५३२ ) इत्येत्त्वाभ्यासलोपा-

विह न, हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । व्यध १८५८ ताडने । 'ग्रहिज्या-( सू० २४१२ ) इति सम्प्रसारणम् । विध्यति । विव्याध । विविधतुः । विव्यधिथ-विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । पुष १२५९ पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादि'-(सू. २३४५) इत्यङ्, अपुषत् । शुष १२६० शोषणे । अशुषत् । तुष १२६१ प्रीतौ । दुष १२६२ वैकृत्ये । श्लिष १२६३ आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ।

२५१४ (क) । श्लिषः ३।१।४५ । अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोपवादः, न तु चिणः । पुरस्तादपवादन्यायात् ।

२५१४ (ख) । आलिङ्गने ३।१।४६ । श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्र । योगविभागसामर्थ्यात् 'शल इगुपधात्-' (सू. २३३६) इत्यस्याप्ययं नियमः । 'अश्लिक्षत्कन्यां देवदत्तः'। 'आलिङ्गन एव' इति किम् ? समश्लिषत् जतुकाष्ठम्, अङ् । प्रत्यासत्ताविह श्लिषिः । कर्मण्यनालिङ्गने सिजेव, न तु क्सः । एकवचने चिण्-अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् । शक १२६४ विभाषितोऽमर्षणे । 'विभाषितः' इत्युभयपदीत्यर्थः । शक्यति-शक्यते वा हरिं द्रष्टुं भक्तः । शशाक । शेकिथ—शशक्थ । शेके । शक्ता । शक्ष्यति—शक्ष्यते । अशकत्—अशक्त । सेट्कोऽयमित्येके । तन्मतेनानिट्कारिकासु लृदित्पठितः । शकिता । शकिष्यति । ञिष्विदा १२६५ गात्रप्रक्षरणे । घर्मस्रुतावित्यर्थः । 'अयं ञीत्' इति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । क्रुध १२६६ क्रोधे । क्रोद्धा । क्रोत्स्यति । क्षुध १२६७ बुभुक्षायाम् । क्षोद्धा ।

कथं 'क्षुधितः' इति ? सम्पदादिक्विबन्तात्तारकादित्वादितच् इति माधवः। वस्तुतस्तु 'वसतिक्षुधोः—' (सू० ३०४६) इतीट् वक्ष्यते। शुध् १२६८ शौचे। शुध्यति। शुशोध। शोद्धा। षिधु १२६९ संराद्धौ। ऊदित्पाठः प्रामादिकः। सिध्यति। सेद्धा। सेत्स्यति। असिधत्। रध १२७० हिंसासंराद्ध्योः। संराद्धिर्निष्पत्तिः। रध्यति। 'रधिजभोरचि' (सू० २३०२) इति नुम्, ररन्धतुः।

२५१५। **रधादिभ्यश्च** ७।२।४५। 'रध्' 'नश्' 'तृप्' 'दृप्' 'द्रुह्' 'मुह्' 'ष्णुह्' 'ष्णिह्' एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। ररन्धिथ-ररद्ध। ररन्धिव-रेध्व।

२५१६। **नेट्यलिटि रधेः** ७।१।६२। लिड्वर्जे इटि रधेर्नुम् न स्यात्। रधिता-रद्धा। रधिष्यति-रत्स्यति। अङि मुम्, 'अनिदिताम्-' (सू० ४१६) इति नलोपः, अरधत्। णश १२७१ अदर्शने। नश्यति। ननाश। नेशतुः। नेशिथ।

२५१७। **मस्जिनशोर्झलि** ७।१।६०। नुम् स्यात्। ननंष्ठ। नेशिव-नेश्व। नेशिम-नेश्म। नशिता-नंष्टा। नशिष्यति-नङ्क्ष्यति। नश्येत्। नश्यात्। अनशत्। प्रणश्यति।

२५१८। **नशेः षान्तस्य** ८।४।३६। णत्वं न स्यात्। प्रनंष्टा। अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम्। प्रनङ्क्ष्यति-नशिष्यति। तृप १२७२ प्रीणने। प्रीणनं तृप्तिस्तर्पणं च। **'नाग्निस्तृप्यति काष्ठानाम्, पितॄन्ताप्सीत्' इति भट्टिः**, इत्युभयत्र दर्शनात्। ततर्पिथ-ततर्प्थ-तत्रप्थ। तर्पिता-तर्प्ता-त्रप्ता। 'स्पृशमृशकृष' (वा० ५५५) इति सिज्वा, अतर्पीत्-अतृपत्-अताप्र्सीत्-अत्राप्सीत्। दृप १२७३ हर्षमोहनयोः। मोहनं गर्वः। 'दृप्यति' इत्यादि।

'रधादिस्वादिमौ वेट्कात्वमर्थमनुदात्तता' ।

द्रुह १२७४ जिघांसायाम् । 'वा द्रुहमुह' ( सू० ३२७ ) इति वा धः । पक्षे ढः । दुद्रोहिथ—दुद्रोग्ध दुद्रोढ । द्रोहिता—द्रोग्धा-द्रोढा । द्रोहिष्यति-ध्रोक्ष्यति । ढत्वधत्वयोस्तुल्यं रूपम् । अद्रुहत् । मुह १२७५ वैचित्ये । वैचित्यमविवेकः । मुह्यति । मुमोहिथ - मुमोग्ध—मुमोढ । मोहिता मोग्धा- मोढा । मोहिष्यति—मोक्ष्यति । अमुहत् । ष्णुह १२७६ उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ—सुष्णोग्ध—सुष्णोढ । सुष्णुहिव—सुष्णुह्व । स्नोहिता—स्नोग्धा— स्नोढा । स्नोहिष्यति-स्नोक्ष्यति । अस्नुहत् । ष्णिह १२७७ प्रीतौ । स्निह्यति । सिष्णेह । वृत् । रधादयः समाप्ताः । पुषादयस्तु आगणान्तादिति सिद्धान्तः । शमु १२७८ उपशमे ।

२५१९ । शमामष्टानां दीर्घः श्यनि ७।३।७४ । शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् । तमु १२७९ काङ्क्षायाम् । ताम्यति । तमिता । अतमत् । दमु । १२८० उपशमे । 'उपशमे' इति ण्यन्तस्य । तेन सकर्मकोऽयम्, न तु शमिवदकर्मकः । अदमत् । श्रमु १२८१ तपसि खेदे च । श्राम्यति । अश्रमत् । भ्रमु १२८२ अनवस्थाने । 'वा भ्राश—' (सू. २३२१) इति श्यन्वा । तत्र कृते 'शमामष्टानाम्–' ( सू. २५१९ ) इति दीर्घः । भ्राम्यति । लुङ्यङ्, अभ्रमत् । शेषं भ्वादिवत् । क्षमू १२८३ सहने । क्षाम्यति । चक्षमिथ-चक्षन्थ । चक्षमिव-चक्षण्व । चक्षमिम चक्षण्म । क्षमिता-क्षन्ता । अयमषित् । भ्वादिस्तु षित् ।

अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा ।

क्लमु १२८४ ग्लानौ । क्लाम्यति–क्लामति । शपीव श्यन्यपि 'ष्ठिवु-

क्लमु-' (सू. २३२०) इत्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः। अङ्, अक्लमत्। मदी १२८५ हर्षे। माद्यति। अमदत्। **शमादयोऽष्टौ गताः**। असु १२८६ क्षेपणे। अस्यति। आस। असिता।

**२५२०। अस्यतेस्थुक् ७।४।१७।** अङि परे। आस्थत्। अस्य पुषादित्वादङि सिद्धे 'अस्यतिवक्ति'—(सू. २४४०) इति वचनं तङर्थम्। तङ् तु **'उपसर्गादस्यत्यूह्योः'**–(वा. ६२८) इति वक्ष्यते। पर्यास्थत। यसु १२८७ प्रयत्ने।

**२५२१। यसोऽनुपसर्गात् ३।१।७१।**

**२५२२। संयसश्च ३।१।७२।** श्यन् वा स्यात्। यस्यति-यसति। संयस्यति-संयसति। 'अनुपसर्गात्' किम्? प्रयस्यति। जसु १२८८ मोक्षणे। जस्यति। तसु १२८९ उपक्षये। दसु १२९० च। तस्यति। अतसत्। दस्यति। अदसत्। वसु १२९१ स्तम्भे। वस्यति। ववास। ववसतुः 'न शसदद-' (सू. २२६३) इति निषेधः। वशादिरयमिति मते तु वेसतुः, वेसुः। व्युष १२९२ विभागे। अयं दाहे पठितः। अर्थभेदेन त्वङर्थं पुनः पठ्यते। अव्युषत्। ओष्ठ्यादिर्दन्त्यान्त्योऽयम्। 'व्युस्' १२९३ इत्यन्ये। अयकारः 'वुस्' १२९४ इत्यपरे। प्लुष १२९५ दाहे। अप्लुषत्। पूर्वत्र पाठः सिजर्थं इत्याहुः। तद् भ्वादिपाठेन गतार्थमिति सुवचम्। विस १२९६ प्रेरणे। विस्यति। अविसत्। कुस १२९७ संश्लेषणे। अकुसत्। बुस १२९८ उत्सर्गे। मुस १२९९ खण्डने। मसी १३०० परिणामे। परिणामो विकारः। 'समी' १३०१ इत्येके। लुठ १३०२ विलोडने। उच १३०३ समवाये। उच्यति। उवोच। ऊचतुः। मा भवान् उचत्। भृशु १३०४ भ्रंशु १३०५ अधः पतने। बभर्श। अभृशत्। 'अनिदिताम्-' (सू. ४१६) इति नलोपः, भ्रश्यति।

अभ्रशत्। वृश १३०६ वरणे। वृश्यति। अवृशत्। कृश १३०७ तनूकरणे। कृश्यति। ञितृषा १३०८ पिपासायाम्। हृष १३०९ तुष्टौ। श्यन्नङौ भौवादिकाद्विशेषः। रुष १३१० रिष १३११ हिंसायाम्। 'तीषसह–' (सू २३४०) इति, वेट् रोषिता-रोष्टा। रेषिता-रेष्टा। डिप १३१२ क्षेपे। कुप १३१३ क्रोधे। गुप १३१४ व्याकुलत्वे। युप १३१५ रुप १३१६ लुप १३१७ विमोहने। युप्यति। रुप्यति लुप्यति। लोपिता। लुप्यतिः सेट्कः, अनिट्कारिकासु। लिपसाहचर्यात्तौदादिकस्यैव ग्रहणात्। लुभ १३१८ गार्ध्ये। गार्ध्यमाकाङ्क्षा। 'तीषसह–' (सू. २३४०) इति वेट्। लोभिता—लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्कृतत्वात् 'लोभति' इत्यपीत्याहुः। क्षुभ १३१९ सञ्चलने। क्षुभ्यति। णभ १३२० तुभ १३२१ हिंसायाम्। क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात्पक्षे सिज्भवत्येव। इह पाठस्तु श्यन्नर्थः। क्लिदू १३२२ आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ–चिक्लेत्थ। चिक्लिदिव–चिक्लिद्व। चिक्लिदिम—चिक्लिद्म। क्लेदिता-क्लेत्ता। ञिमिदा १३२३ स्नेहने। 'मिदेर्गुणः' (सू. २३४६), मेद्यति। अमिदत्। द्युतादिपाठादेव 'अमिदत्' 'अमेदिष्ट' इति सिद्धे इह पाठः 'अमेदीत्' इति मा भूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। ञिक्ष्विदा १३२४ स्नेहनमोचनयोः। ऋधु १३२५ वृद्धौ। आनर्ध। आर्धत्। गृधु १३२६ अभिकाङ्क्षायाम्। अगृधत्। वृत्। **पुषादयो दिवाद्यन्तर्गणश्च वृत्ताः।** केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन 'क्षीयते' 'मृग्यति' इत्यादिसिद्धिरित्याहुः।

इति तिङन्ते दिवादिप्रकरणम्।

## अथ तिङन्ते स्वादिप्रकरणम् ।

षुञ् १२४७ अभिषवे । अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं च । तत्र स्नाने अकर्मकः ।

२५२३ । स्वादिभ्यः श्नुः ३।१।७३ । सुनोति । सुनुतः । 'हुश्नुवोः'—(सू. २३८७) इति यण् । सुन्वन्ति । सुन्वः—सुनुवः । सुन्वहे-सुनुवहे । सुषाव-सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् । 'स्तुसुधूञ्भ्यः—' (सू. २३८४ ) इतीट् , असावीत्-असोष्ट । अभिषुणोति । अभ्यषुणोत् । अभिसुषाव ।

२५२४ । सुनोतेः स्यसनोः ८।३।११७ । स्ये सनि च परे सुञः षो न स्यात् । विसोष्यति । षिञ् १२४८ बन्धने । सिनोति । विसिनोति । सिषाय । सिष्ये । सेता । शिञ् १२४९ निशाने । तालव्यादिः । शेता । डुमिञ् १२५० प्रक्षेपणे । मीनातिमिनोति—' ( सू. २५०८ ) इत्यात्त्वम् । ममौ । ममिथ-ममाथ । मिम्ये । माता । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । चिञ् १२५१ चयने । प्रणिचिनोति ।

२५२५ । विभाषा चेः ७।३।५८ । अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि । लिटि च । प्रणिचिकाय—चिचाय । चिक्ये-चिच्ये । अचैषीत्-अचेष्ट । स्तृञ् १२५२ आच्छादने । स्तृणोति—स्तृणुते । 'गुणोऽर्ति' ( सू. २३८२ ) इति गुणः । स्तर्यात् ।

२५२६ । ऋतश्च संयोगादेः ७।२।४३ । ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट-स्तृषीष्ट । अस्तरिष्ट-अस्तृत । कृञ् १२५३ हिंसायाम् । कृणोति-कृणुते । चकार । चकर्थ । चक्रे । क्रियात्-कृषीष्ट । अकार्षीत्-अकृत । वृञ् १२५४ वरणे ।

२५२७। **बभूथाततन्थजगृम्भववर्थेति निगमे** ७।२।६४। एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्। ववरिथ। ववृव। ववृवहे। वरिता-वरीता।

२५२८। **लिङसिचोरात्मनेपदेषु** ७।२।४२। वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि।

२५२९। **न लिङि** ७।२।३९। वॄतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट-वृषीष्ट। अवरीत-अवरिष्ट-अवरीष्ट-अवृत। धुञ् १३३५ कम्पने। धुनोति-धुनुते। अधौषीत्। अधोष्यत। दीर्घान्तोऽप्ययम् १३३६ धूनोति। धूनुते। 'स्वरतिसूति' (सू.२२७९) इति वेट्। दुधविथ-दुधोथ। किति लिटि तु 'श्र्युकः'—(सू. २३८१) इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्, दुधुविव। 'स्तुसुधूञ्भ्यः'—(सू. २३८५) इति नित्यमिट्। अधावीत्। अधविष्ट-अधोष्ट।

**अथ परस्मैपदिनः**। टुदु १३३७ उपतापे। दुनोति। हि १३३८ गतौ वृद्धौ च।

२५३०। **हिनुमीना** ८।४।१५। उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्। प्रहिणोति।

२५३१। **हेरचङि** ७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। पृ १३३९ प्रीतौ। पृणोति। पर्ता। स्पृ १३४० प्रीतिपालनयोः। 'प्रीतिचलनयोः' इत्यन्ये। चलनं जीवनम् इति स्वामी। स्पृणोति। पस्पार। 'स्मृ' १३४१ इत्येके। स्मृणोति। पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः। आप्लृ १३४२ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप। आप्ता। आप्नुहि। लृदित्त्वादङ्, आपत्। शक्लृ १३४३ शक्तौ। अशकत्। राध १३४४ साध १३४५ संसिद्धौ। राध्नोति।

**२५३२। राधो हिंसायाम् ६।४।१२३।** एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। अपरेधतुः। रेधुः। रेधिथ। राद्धा। साध्नोति। साद्धा। असात्सीत्। असाद्धाम्।

**अथ द्वावनुदात्तेत्तौ।** अशू १३४६ व्याप्तौ सङ्घाते च। अश्नुते।

**२५३३। अश्नोतेश्च ७।४।७२।** दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात्। आनशे। अशिता—अष्टा। अशिष्यते-अक्ष्यते। अश्नुवीत। अक्षीष्ट - अशिषीष्ट। आशिष्ट—आष्ट। आक्षाताम्। ष्टिघ १३४७ आस्कन्दने। स्तिघ्नुते। तिष्टिघे। स्तेघिता।

**अथ आगणान्ताःपरस्मैपदिनः।** तिक १३४८ तिग १३४९ गतौ च। चादास्कन्दने। तिक्नोति। तिग्नोति। षघ १३५० हिंसायाम्। सघ्नोति। ञिधृषा १३५१ प्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता। दम्भु १३५२ दम्भने। दम्भनं दम्भः। दभ्नोति। ददम्भ। **'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा'** इति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम्। 'अनिदिताम्—' ( सू. ४१६ ) इति नलोपः। तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ ***५६४ दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ*।** देभतुः। ददम्भतुः। **'इदं कित्वं पिदपिद्विषयकम्' इति सुधाकरादयः।** तन्मते तिप्सिप्मिप्सु-'देभ' 'देभिथ' 'देभ' इति रूपान्तरं, बोध्यम्। **'अपिद्विषयकम्' इति** न्यासकारादिमते तु-'ददम्भ' 'ददम्भिथ' 'ददम्भ इत्येव। दभ्यात्। ऋधु १३५३ वृद्धौ। 'तृप १३५४ प्रीणने' इत्येके। क्षुभ्नादित्वाण्णत्वं न, तृप्नोति। **'छन्दसि'** ( ग ) आगणान्तादधिकारोऽयम्। अह १३५५ व्याप्तौ। अह्नोति। दघ १३५६ घातने पालने च। दघ्नोति। चमु १३५७ भक्षणे। चम्नोति। रि १३५८ क्षि १३५९ चिरि १३६० जिरि

१३६१ दाश १३६२ दृ १३६३ हिंसायाम् । रिणोति । क्षिणोति । 'अयं भाषायामपि' इत्येके । 'न तद्यशः शस्त्रभृतां क्षिणोति' 'ऋक्षि १३६४ इत्येक एवाजादिः' इत्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । वृत ।

इति तिङन्ते स्वादिप्रकरणम् ।

## अथ तिङन्ते तुदादिप्रकरणम् ।

तुद १३६५ व्यथने । इतः **षट् स्वरितेतः** ।

२५३४ । **तुदादिभ्यः शः** ३।१।७७। तुदति—तुदते । तुतोद । तुतोदिथ । तुतुदे । तोता । अतौत्सीत्-अतुत्त । णुद १३६६ प्रेरणे नुदति—नुदते । नुनोद—नुनुदे । नोत्ता । दिश १३६७ अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत्—अदिक्षत । भ्रस्ज १३६८ पाके । 'ग्रहिज्या-' ( सू. २४१२ ) इति सम्प्रसारणम् , सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः, भृज्जते ।

२५३५ । **भ्रस्जो रोपधयो रमन्यतरस्याम्** ६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ-बभर्ष्ठ । बभर्जे । रमभावे-बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । 'स्कोः- ( सू. ३८० ) इति सलोपः, 'व्रश्च-' ( सू. २९४ ) इति षः, बभ्रष्ठ । बभ्रज्जे । भ्रष्टा-भर्ष्टा । भ्रक्ष्यति-भर्क्ष्यति । **ॐ१६५ ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन**ॐ । भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट-भ्रक्षीष्ट । अभार्क्षीत्-अभ्राक्षीत् । अभर्ष्ट-अभ्रष्ट । क्षिप १३६९ प्रेरणे । क्षिपति-क्षिपते । क्षेप्ता । अक्षैप्सीत्-अक्षिप्त । कृष १३७० विलेखने । कृषति-कृषते । क्रष्टा-कर्ष्टा । कृष्यात्-कृक्षीष्ट ।

'स्पृशमृश-' ( वा. ५५५ ) इति सिज्वा। पक्षे क्सः। सिचि अम्वा, अक्राक्षीत्-अकार्क्षीत्-अकृक्षत। तङि 'लिङ्सिचौ-' ( सू. २३००) इति कित्त्वादम्न, अकृष्ट। अकृक्षाताम्। अकृक्षत। अकृक्षत। अकृक्षाताम्। अकृक्षन्त। ऋषी १३७१ गतौ। परस्मैपदी। ऋषति। आनर्ष। जुषी १३७२ प्रीतिसेवनयोः। **आत्मनेपदिनश्चत्वारः।** जुषते। ओविजी १३७३ भयचलनयोः। प्रायेणायमुत्पूर्वः। उद्विजते।

**२५३१। विज इट् १।२।२।** विजेः पर इडादिः प्रत्ययो ङिद्वत्। उद्विजिता। उद्विजिष्यते। ओलजी १३७४ ओलस्जी १३७५ व्रीडायाम्। लजते। लेजे। लज्जते। ललज्जे।

**अथ परस्मैपदिनः।** ओव्रश्चू १३७६ छेदने। 'ग्रहिज्या-' ( सू. २४१२), वृश्चति। वव्रश्च। वव्रश्चतुः। वव्रश्चिथ-वव्रष्ठ। 'लिट्यभ्यासस्य-' (सू. २४८) इति सम्प्रसारणम्। रेफस्य ऋकारः। 'उरत्' (सू. २२४४ ), तस्य च 'अचः परस्मिन्-' (सू. ५०) इति स्थानिवद्भावात् 'न सम्प्रसारणे-' (सू, ३६३) इति वस्योत्वं न। व्रश्चिता-व्रष्टा। व्रश्चिष्यति-व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्-अव्राक्षीत्। अव्रक्ष्यत्। व्यच १३७७ व्याजीकरणे। विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्-अव्यचीत्। **'व्यचेः कुटादित्वमनसि' ( ग )** इति तु नेह प्रवर्तते, 'अनसि' इति पर्युदासेन कृन्मात्रविषयत्वात्। उछि १३७८ उञ्छे। उञ्छति। उच्छी १३७९ विवासे। उच्छति। ऋच्छ १३८० गतीन्द्रियप्रलयमूर्तिभावेषु। 'ऋच्छत्यृताम्' (सू. २३८३) इति गुणः। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्, आनर्च्छ। आनर्च्छतुः। ऋच्छिता। मिच्छ १३८१ उत्क्लेशे। उत्क्लेशः पीडा। मिमिच्छ। अमिच्छीत्। जर्ज १३८२ चर्च १३८३ झर्झ १३८४ परि-

भाषणभर्त्सनयोः। त्वच १३८५ संवरणे। तत्वाच। ऋच १३८६ स्तुतौ। आनर्च। उब्ज १३८७ आर्जवे। उज्झ १३८८ उत्सर्गे। लुभ १३८९ विमोहने। विमोहनमाकुलीकरणम्। लुभति। लोभिता-लोब्धा। लोभिष्यति। रिफ १३९० कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ। 'रिह' १३९१ इत्येके। **'शिशुं न विप्रा मतिभी रिहन्ति'।** तृप १३९२ तृम्फ १३९३ तृप्तौ। आद्यः प्रथमान्तः। द्वितीयो द्वितीयान्तः। द्वावपि द्वितीयान्तावित्यन्ये। तृपति। ततर्प। तर्पिता। 'स्पृशमृश-' (वा. ५५५) इति सिज्विकल्पः पौषादिकस्यैव, अपवादत्वात्। तेनात्र नित्यं सिच्, अतर्पीत्। तृम्फति। शस्य ङित्त्वात् 'अनिदिताम्' (सू. ४१६) इति नलोपे **%५६६ शे तृम्फादीनां नुम् वाच्यः%।** आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। तृम्फति। ततृम्फ। तृफ्यात्। तुप १३९४ तुम्प १३९५ तुफ १३९६ तुम्फ १३९७ हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति। दृप १३९८ दृम्फ १३९९ उत्क्लेशे। प्रथमः प्रथमान्तः। द्वितीयो द्वितीयान्तः। 'प्रथमो द्वितीयान्त' १४०० इत्येके। दृपति। दृम्फति। ऋफ १४०१ ऋम्फ १४०२ हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फाञ्चकार। गुफ १४०३ गुम्फ १४०४ ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ। उभ १४०५ उम्भ १४०६ पूरणे। उभति। उवोभ। उम्भति। उम्भाञ्चकार। शुभ १४०७ शुम्भ १४०८ शोभार्थे। शुभति। शुम्भति। दृभी १४०९ ग्रन्थे। दृभति। चृती १४१० हिंसाश्रन्थनयोः। चर्तिता। 'सेऽसिचि-' (सू. २५०६) इति वेट्। चर्तिष्यति-चर्त्स्यति। अचर्तीत्। विध १४११ विधाने। विधति। वेधिता। जुड १४१२ गतौ। 'तवर्गपञ्चमान्त' १४१३ इत्येके। जुडति। 'मरुतो जुनन्ति'। मृड १४१४ सुखने। मृडति।

मर्डिता। पृड १४१५ च। पृडति। पृण १४१६ प्रीणने। पृणाति। पपर्ण। वृण १४१७ च। वृणति। मृण १४१८ हिंसायाम्। तुण १४१९ कौटिल्ये। तुतोण। पुण १४२० कर्मणि शुभे। पुणति। मुण १४२१ प्रतिज्ञाने। कुण १४२२ शब्दोपकरणयोः। शुन १४२२ गतौ। द्रुण १४२४ हिंसागतिकौटिल्येषु। घुण १४२५ घूर्ण १४२६ भ्रमणे। षुर १४२७ ऐश्वर्यदीप्त्योः। सुरति। सुसोर। आशिषि—सूर्यात्। कुर १४२८ शब्दे। कुरति। कुर्यात्। अत्र 'न भकुर्छुराम्' (सू० १६२९) इति निषेधो न, करोतेरेव तत्र ग्रहणादित्याहुः। खुर १४२९ छेदने। मुर १४३० संवेष्टने। क्षुर १४३१ विलेखने। घुर १४३२ भीमार्थशब्दयोः। पुर १४३३ अग्रगमने। वृहू १४३४ उद्यमने। दन्त्योष्ठ्यादिः। 'पवर्गीय दिः' १४३५ इत्यन्ये। तृहू १४३६ स्तृहू १४३७ तृंहू १४३८ हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता-तर्ढा। स्तर्हिता-स्तर्ढा। अतृंहीत्-अतार्क्षीत्। अतार्ढाम्। इषु १४३९ इच्छायाम्। 'इषुगमि-' (सू० २४००) इति छः। इच्छति। एषिता-एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष १४४० स्पर्धायाम्। मिषति। मेषिता। किल १४४१ श्वैत्यक्रीडनयोः। तिल १४४२ स्नेहने। चिल १४४३ वसने। चल १४४४ विलसने। इल १४४५ स्वप्नक्षेपणयोः। विल १४४६ संवरणे। दन्त्योष्ठ्यादिः। बिल १४४७ भेदने। ओष्ठ्यादि। णिल १४४८ गहने। हिल १४४९ भावकरणे। शिल १४५० षिल १४५१ उञ्छे। मिल १४५२ श्लेषणे। लिख १४५३ अक्षरविन्यासे। लिलेख। कुट १४५४ कौटिल्ये। 'गाङ्कुटादिभ्यः—' (सू. २४६१) इति ङित्वं, चुकुटिथ। चुकोट—चुकुट। कुटिता। पुट १४५५ संश्लेषणे। कुच १४५६ सङ्कोचने। गुज १४५७ शब्दे।

गुड १४५८ रक्षायाम् । डिप १४५९ क्षेपे । छुर १४६० छेदने । 'न भकुर्छुराम्' ( सू० २६२९ ) इति न दीर्घः, छुर्यात् । स्फुट १४६१ विकसने । स्फुटति । पुस्फोट । मुट १४६२ आक्षेपमर्दनयोः । त्रुट १४६३ छेदने । 'वा भ्राश—'(सू. २३२१) इति श्यन्वा त्रुट्यति-त्रुटति । तुत्रोट । त्रुटिता । तुट १४६४ कलहकर्मणि । तुटति । तुतोट । तुटिता । चुट १४६५ छुट १४६६ छेदने । जुट १४६७ बन्धने । कड १४६८ मदे । लुट १४६९ संश्लेषणे । कृड १४७० घनत्वे । घनत्वं सान्द्रता । चकर्ड । कृडिता । कुड १४७१ बाल्ये । पुड १४७२ उत्सर्गे । घुट १४७३ प्रतिघाते । तुड १४७४ तोडने । तोडनं भेदः । थुड १४७५ स्थुड १४७६ संवरणे । थुडति । तुथोड । तुस्थोड । 'खुड' १४७७ 'छुड' १४७८ इत्येके । स्फुर १४७९ स्फुल १४८० सञ्चलने । स्फुर १४८१ स्फुरणे, स्फुल ( १४८१ ) सञ्चलने इत्येके ।

२५३७ । स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६। षत्वं वा स्यात् । निःष्फुरति-निःस्फुरति । 'स्फर' १४८२ इत्यकारोपधं केचित्पठन्ति । पस्फार । स्फुड १४८३ चुड १४८४ व्रुड १४८५ संवरणे । 'क्रुड १४८६ भृड १४८७ निमज्जने' इत्येके । गुरी १४८८ उद्यमने । अनुदात्तेत् । गुरते । जुगुरे । गुरिता । णू १४८९ स्तवने । दीर्घान्तः । 'परिणूतगुणोदयः' ।

इतश्चत्वारः परस्मैपदिनः । नुवति । अनुवीत् । धू १४९० विधूनने । धुवति । गु १४९१ पुरीषोत्सर्गे । जुगुविथ—जुगुथ । गुता । गुष्यति । अगुषीत् । 'ह्रस्वादङ्गात्' (सू. २३६९) । अगुताम् । अगुषुः । ध्रु १४९२ गतिस्थैर्ययोः । 'ध्रुव' १४९३ इति पाठान्तरम् । आद्यस्य 'ध्रुवति' इत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता ।

ध्रुविष्यति । ध्रूव्यात् । अध्रुवीत् । अध्रुविष्टाम् । कुङ् १४९४ शब्दे । 'दीर्घान्तः' १४९५ इति कैयटादयः, कुविता । अकुविष्ट । 'ह्रस्वान्तः' इति न्यासकारः, कुता । अकुत । वृत् । **कुटादयो वृत्ताः** ।

पृङ् १४९६ व्यायामे । प्रायेण व्याङ्पूर्वः । रिङ्, इयङ्-व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । मृङ् १४९७ प्राणत्यागे ।

२५३८ । **म्रियतेर्लुङ्लिङोश्च** १।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्त्वं स्वरार्थम् । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ।

**अथ परस्मैपदिनः सप्त** । रि १४९८ पि १४९९ गतौ । अन्तर्गत्वादियङ्, रियति । पियति । रेता । पेता । धि १५०० धारणे । क्षि १५०१ निवासगत्योः । षू १५०२ प्रेरणे । सुवति । सविता । कॄ १५०३ विक्षेपे । किरति । किरतः । चकार । चकरतुः । करिता-करीता । कीर्यात् । अकारीत् ।

२५३९ । **किरतौ लवने** ६।१।१४०। उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति । ॐ५६७**अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्**ॐ । उपास्किरत् । उपचस्कार ।

२५४० **हिंसायां प्रतेश्च** ६।१।१४१। उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ १५०४ निगरणे ।

२५४१ । **अचि विभाषा** ८।२।२१। गिरतेः रेफस्य लत्वं वा स्यादजादौ । गिरति-गिलति । जगार-जगाल । जगरिथ—जगलिथ । गरिता-गरीता । गलिता-गलीता । दृङ् १५०५ आदरे । आद्रियते । आद्रियेते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् । धृङ् १५०६ अवस्थाने । ध्रियते ।

अथ परस्मैपदिनः षोडश । प्रच्छ १५०७ ज्ञीप्सायाम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ–पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । वृत् । किरादयो वृत्ताः । सृज १५०८ विसर्गे । 'विभाषा सृजिदृशोः' (सू. २४०४), ससर्जिथ–सस्रष्ठ । स्रष्टा । स्रक्ष्यति, 'सृजिदृशोर्झल्यमकिति' ( सू. २४०५ ) इत्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् । टुमस्जो १५०९ शुद्धौ । मज्जति । ममज्ज । 'मस्जिनशोर्झलि' (सू. २५१७) इति नुम् । *५६८ मस्जेरन्त्यात्पूर्वो नुम् वाच्यः* । संयोगादिलोपः, ममङ्क्थ–ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः । रुजो १५१० भङ्गे । रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् । भुजो १५११ कौटिल्ये । रुजिवत् । छुप १५१२ स्पर्शे । छोप्ता । अच्छौप्सीत् । रुश १५१३ रिश १५१४ हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । लिश १५१५ गतौ । अलिक्षत् । स्पृश १५१६ संस्पर्शने । स्प्रष्टा-स्पर्ष्टा । स्प्रक्ष्यति-स्पर्क्ष्यति । अस्प्राक्षीत्–अस्पार्क्षीत्–अस्पृक्षत् । विच्छ १५१७ गतौ । 'गुपूधूप'–(सू. २३०३) इत्यायः । आर्धधातुके वा । विच्छायति । विच्छायाञ्चकार–विविच्छ । विश १५१८ प्रवेशने । विशति । वेष्टा । मृश १५१९ आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत्-अमार्क्षीत्-अमृक्षत् । णुद १५२० प्रेरणे । कर्त्रभिप्राऽयेपि फले परस्मैपदार्थः पुनः पाठः । षद्लृ १५२१ विशरणगत्यवसादनेषु । 'सीदति' इत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः । सीदती–सीदन्ती । ज्वलादौ पाठस्तु णार्थः । सादः स्वरार्थश्च । शबनुदात्तः । शस्तूदात्तः । शद्लृ १५२२ शातने । स्वरार्थ एव पुनः पाठः । शता तु नास्ति । 'शदेः शितः' (सू. २३६२) इत्यात्मनेपदोक्तेः ।

**अथ षट् स्वरितेतः।** मिल १५२३ सङ्गमे। 'मिल संश्लेषणे' इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः। मेलति-मिलते। मिमेल-मिमिले। मुच्लृ १५२४ मोक्षणे।

**२५४२। शे मुचादीनाम् ७।१।५९।** नुम् स्यात्। मुञ्चति-मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्-अमुक्त। अमुक्षाताम्। लुप्लृ १५२५ छेदने। लुम्पति। लुम्पते। अलुपत्-अलुप्त। विद्लृ १५२६ लाभे। विन्दति-विन्दते। विवेद-विविदे। व्याघ्रभूत्यादिमते सेट्कोऽयम्, वेदिता। भाष्यादिमतेऽनिट्कः, वेत्ता। परिवेत्ता, परिवर्जने, ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः। तृन्तृचौ। लिप १५२७ उपदेहे। उपदेहो वृद्धिः। लिम्पति-लिम्पते। लेप्ता। 'लिपिसिचि-' (सू. २४१८) इत्यङ्, तङि तु वा, अलिपत्-अलिपत-अलिप्त। षिच १५२८ क्षरणे। सिञ्चति-सिञ्चते। असिचत्-असिचत-असिक्त। अभिषिञ्चति। अभ्यषिञ्चत्। अभिषिषेच।

**अथ त्रयः परस्मैपदिनः।** कृती १५२९ छेदने। कृन्तति। चकर्त। कर्तिता। कर्तिष्यति—कर्त्स्यति। अकर्तीत्। खिद १५३० परिघाते। खिन्दति। चिखेद। खेत्ता। अयं दैन्ये दिवादौ रुधादौ च। पिश १५३१ अवयवे। पिंशति। पेशिता। अयं दीपनायामपि। 'त्वष्टा रूपाणि पिंशतु,' वृत्। मुचादयस्तुदादयश्च वृत्ताः।

इति तिङन्ते तुदादिप्रकरणम्।

## अथ तिङन्ते रुधादिप्रकरणम्।

रुधिर् १५३२ आवरणे। **नव स्वरितेतः इरितश्च।**

**२५४३। रुधादिभ्यः श्नम् ३।१।७८।** शपोऽपवादः। मित्वादन्त्यादचः परः। नित्यत्वात् गुणं बाधते। रुणद्धि। 'श्नसोरल्लोपः'(सू.

२४६९ )। णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः। तस्यासिद्धत्वाण्णत्वं न। 'न पदान्त—' (सू.५१) इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत। रुन्धः। रुन्धन्ति। रुन्धे। रोद्धा। रोत्स्यति-रोत्स्यते। रुणद्धु-रुन्धात। रुन्धि। रुणधानि-रुणधै। अरुणत। अरुन्धाम्। अरुणत—अरुणः। अरुणधम्। अरुधत—अरौत्सीत-अरुद्ध। भिदिर् १५३३ विदारणे। भिनत्ति। भिन्ते। भेत्ता। भेत्स्यति। अभिनत-अभिनः। अभिनदम्। अभिन्त। अभिदत—अभैत्सीत्-अभित्त। छिदिर् १५३४ द्वैधीकरणे। अच्छिदत-अच्छैत्सीत-अच्छित्त। रिचिर् १५३५ विरेचने। रिणक्ति-रिङ्क्ते। रिरेच-रिरिचे। रेक्ता। अरिणक्। अरिचत-अरैक्षीत-अरिक्त। विचिर् १५३६ पृथग्भावे। विनक्ति-विङ्क्ते। क्षुदिर् १५३७ सम्पेषणे। क्षुणत्ति-क्षुन्ते। क्षोत्ता। अक्षुदत—अक्षौत्सीत-अक्षुत्त। युजिर् १५३८ योगे। योक्ता। उछृदिर् १५३९ दीप्तिदेवनयोः। छृणत्ति-छृन्ते। चच्छर्द। 'सेऽसिचि-' (सू. २५०६) इति वेट्, चच्छृदिषे—चच्छृत्से। छर्दिता। छर्दिष्यति—छर्त्स्यति। अच्छृदत—अच्छर्दीत-अच्छर्दिष्ट। उतृदिर् १५४० हिंसानादरयोः। तृणत्ति-इत्यादि-छृणत्तिवत। कृती १५४१ वेष्टने। परस्मैपदी। कृणत्ति। आर्धधातुके तौदादिकवत। ञिइन्धी १५४२ दीप्तौ। अथ आत्मनेपदिनः।

**२५४४। श्नान्नलोपः ६।४।२३।** श्नमः परस्य नस्य लोपः स्यात। 'श्नसोरल्लोपः' (सू. २४६९), इन्धे। इन्त्से। इन्धिता। इनधै। ऐन्ध। ऐन्धाः। खिद १५४३ दैन्ये। खिन्ते। खेत्ता। विद १५४४ विचारणे। विन्ते। वेत्ता।

**अथ परस्मैपदिनः।** शिष्लृ १५४५ विशेषणे। शिनष्टि। शिष्टः।

शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धि: । जश्त्वम्, ष्टुत्वं, 'झरो-झरि –' (सू. १७) इति वा डलोपः, अनुस्वारपरसवर्णौ, शिण्ढि – शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्वादङ, अशिषत् । पिष्लृ १५४६ संचूर्णने । शिषिवत् । पिनष्टि । भञ्जो १५४७ आमर्दने । भनक्ति । बभञ्जिथ–बभङ्क्थ । भङ्क्ता । भुज १५४८ पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । तृह १५४९ हिंसि १५५० हिंसायाम् ।

२५४५ । तृणह इम् ७।३।९२ । तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । उन्दी १५५१ क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः–औनत् । औनदम् । अन्जू १५५२ व्यक्ति[1] म्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ–आनङ्क्थ । अङ्क्ता–अञ्जिता । अङ्ग्धि । अनजानि । आनक् ।

२५४६ । अञ्जेः सिचि ७।२।७१ । अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । तञ्चू १५५३ सङ्कोचने । तनक्ति । तङ्क्ता–तञ्चिता । ओविजी १५५४ भयचलनयोः । विनक्ति । विङ्क्तः । 'विज इट्' (सू. २५३६ ) इति ङित्त्वम् , विविजिथ । विजिता । अविनक् । अविजीत् । वृजी १५५५ वर्जने । वृणक्ति । वर्जिता । पृची १५५६ सम्पर्के । पृणक्ति । पपर्च ।

इति तिङन्ते रुधादिप्रकरणम् ।

---

१. म्रक्षणं स्निग्धता ।

# अथ तिङन्ते तनादिप्रकरणम्।

अथ सप्त स्वरितेतः। तनु १५५७ विस्तारे। 'तनादिकृञ्भ्य उः' (सू. २४६६)। तनोति। तन्वः-तनुवः। तनुते। ततान-तेने। तनु। अतनीत्-अतानीत्।

२५४७। **तनादिभ्यस्तथासोः ( २।४।७९ )**। तनादेः सिचो वा लुक्स्यात्तथासोः। थासा साहचर्यादेकवचनतशब्दो गृह्यते। तेनेह न-यूयमतनिष्ट—अतानिष्ट। अनुदात्तोपदेश—' (सू. २४२८) इत्यनुनासिकलोपः। तङि, अतत-अतनिष्ट। अतथाः-अतनिष्ठाः। षणु १५५८ दाने। सनोति-सनुते। 'ये विभाषा' (सू. २३१९), सायात्-सन्यात्। 'जनसन—' (सू. २५०४) इत्यात्त्वम्, असात-असनिष्ट। असाथाः—असनिष्ठाः। क्षणु १५५९ हिंसायाम्। क्षणोति-क्षणुते। 'ह्मयन्त—( सू. २२९९ ) इति न वृद्धिः, अक्षणीत्—अक्षत—अक्षणिष्ट। अक्षथाः—अक्षणिष्ठाः। क्षिणु १५६० च। उप्रत्ययनिमित्तो लघूपधगुणः 'संज्ञापूर्वको विधिरनित्यः' ( प. ९४ ) इति न भवति, इति आत्रेयादयः। भवत्येव इत्यन्ये। क्षिणोति-क्षेणोति। क्षेणितासि-क्षेणितासे। अक्षेणीत्-अक्षित-अक्षेणिष्ट। ऋणु १५६१ गतौ। ऋणोति-अर्णोति। अर्णुतः। अर्णुवन्ति। आनर्ण-आनृणे। अर्णितासि। आर्णीत्-आर्त-आर्णिष्ट। आर्थाः-आर्णिष्ठाः। तृणु १५६२ अदने। तृणोति-तर्णोति। तृणुते-तर्णुते। घृणु १५३३ दीप्तौ। जघर्ण-जघृणे।

अथ द्वावनुदात्तेतौ। वनु १५४६ याचने। वनुते। ववने। चान्द्रमते परस्मैपदी। वनोति। ववान। मनु १५६५ अवबोधने। मनुते। मेने। डुकृञ् १५६६ करणे। करोति। 'अत उत्सार्वधातुके'

( सू. २४६७ ) कुरुतः। यण्, 'न भकुर्छुराम्' ( सू. १६२९ ) इति न दीर्घः, कुर्वन्ति।

२५४८। नित्यं करोतेः ६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमयोः परयोः। कुर्वः। कुर्मः। चकर्थ। चकृव। चकृषे। कर्ता। करिष्यति।

२५४९। ये च ६।४।१०९। कृञ उलोपः स्याद्यादौ प्रत्यये परे। कुर्यात्। आशिषि क्रियात्—कृषीष्ट। अकार्षीत्। 'तनादिभ्यः—' ( सू २५४७ ) इति लुकोऽभावे 'ह्रस्वादङ्गात्' ( सू. २३६९ ) इति सिचो लोपः, अकृत। अकृथाः।

२५५०। संपरिभ्यां करोतौ भूषणे ६।१।१३७।

२५५१। समवाये च ६।१।१३८। सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे सङ्घाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। संपूर्वस्य क्वचिदभूषणेऽपि सुट्, 'संस्कृतं भक्षाः' ( स १२१९ ) इति ज्ञापकात्। 'परनिविभ्य—' ( सू. २२७५ ) इति षः, परिष्करोति। 'सिवादीनां वा—' ( सू. २३५९ ) पर्यष्कार्षीत्-पर्यस्कार्षीत्।

२५५२। उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६।१।१३९। उपात्कृञः सुट् स्यादेष्वर्थेषु, चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्यस्याध्याहारः आकांक्षितैकदेशपूरणम्। उपस्कृता कन्या। अलङ्कृतेत्यर्थः। उपस्कृताः ब्राह्मणाः। समुदिता इत्यर्थः। एधो दकस्योपस्कुरुते। गुणाधानं करोतीत्यर्थः। उपस्कृतं भुङ्क्ते। विकृतमित्यर्थः। उपस्कृतं ब्रूते। वाक्याध्याहारेण ब्रूते इत्यर्थः।

२५५३ । सुट्कात्पूर्वः ६।१।१३५ । 'अडभ्यासव्यवायेऽपि' (वा. ५७१) इत्युक्तम् । सञ्चस्कार । 'कात्पूर्वः' इत्यादि भाष्ये प्रत्याख्यातम् । तथा हि-पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवं च 'ऋतश्च संयोगादेर्गुणः' (सू० २३७९) 'सञ्चस्करतुः । 'कृसृभृवृ-' (सू० २२९३) इति सूत्रे 'ऋतो भारद्वाजस्य' (सू० २२९६) इति सूत्रे च ॐ५६९ कृञोऽसुट इति वक्तव्यम्ॐ । तेन ससुट्कात्परस्येट्, सञ्चस्करिथ । सञ्चस्करिव । 'गुणोऽर्ति—'(सू. २३८०) इति सूत्रे 'नित्यं छन्दसि' (सू० ३५८५) इति सूत्रात् 'नित्यम्'इत्यनुवर्तते । 'नित्य यः सयोगादिस्तस्य' इत्यर्थात् सुटि गुणो न संस्क्रियात् । 'ऋतश्च संयोगादेः' (सू, २५२६) इति तिङ्सिचोर्नेट्, 'एकाच उपदेशे—' (सू. २२४६) इति सूत्रात् 'उपदेशे' इत्यनुवर्त्य उपदेशे यः संयोगादिः' इति व्याख्यानात् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् ।

इति तिङन्ते तनादिप्रकरणम् ।

## अथ तिङन्ते क्र्यादिप्रकरणम् ।

डुक्रीञ् १५६७ द्रव्यविनिमये ।

२५५४ । क्र्यादिभ्यः श्ना ३।१।८१। क्रीणाति । 'ई हल्यघोः' (सू. २४९७) क्रीणीतः । ईत्वापूर्वं झेरन्तादेशः,परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्य अद्भावः । ततः 'श्नाभ्यस्तयोः-' (सू. २४८३) इत्यालोपः, क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ-चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीयात्-क्रेषीष्ट । अक्रैषीत्-अक्रेष्ट । प्रीञ् १५६८ तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति-प्रीणीते । श्रीञ् १५६९ पाके । मीञ् १५७०

हिंसायाम् । 'हिनुमीना' (सू.२५३०), प्रमीणाति । प्रमीणीतः । 'मीनातिमिनोति—' (सू.२५०८) इत्येज्विषये आत्त्वम् , ममौ । मिम्यतुः । ममिथ-ममाथ । मिम्ये । माता । मास्यति । मीयात्-मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । षिञ् १५७१ बन्धने । सिनाति-सिनीते । सिषाय-सिष्ये । सेता । स्कुञ् १५७२ आप्रवणे ।

२५५५ । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ३।१।८२। चात् श्ना । स्कुनोति-स्कुनुते-स्कुनाति-स्कुनीते । चुस्काव चुस्कुवे । स्कोता । अस्कौषीत्-अस्कोष्ट । स्तम्भ्वादयश्चत्वारः १५७३, १५७४, १५७५, १५७६ सौत्राः। सर्वे रोधनार्था इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । सर्वे परस्मैपदिनः। नलोपः, विष्टभ्नोति-विष्टभ्नाति। अवष्टभ्नोति-अवष्टभ्नाति। अवतष्टम्भ । 'जॄस्तम्भु-' ( सू. २२९१ ) इत्यङ् वा, व्यष्टभत्--व्यष्टम्भीत् । स्तुभ्नोति-स्तुभ्नाति ।

२५५६ । वेः स्कभ्नातेर्नित्यम् ८।३।७७। वेः परस्य स्कभ्नातेः सस्य षः स्यात्। विष्कभ्नोति-विष्कभ्नाति । स्कुभ्नोति-स्कुभ्नाति ।

२५५७ । हलः श्नः शानज्झौ ३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान। स्तुभान। स्कभान। स्कुभान। पक्षे 'स्तभ्नुहि' इत्यादि। युञ् १५७७ बन्धने। युनाति-युनीते। योता। क्नूञ् १५७८ शब्दे। क्नूनाति-क्नूनीते। क्नविता। द्रूञ् १५७९ हिंसायाम्। द्रूणाति-द्रूणीते। पूञ् १५८० पवने।

२५५८ । प्वादीनां ह्रस्वः ७।३।८०। शिति परे । पुनाति पुनीते। पविता। लूञ् १५८१ छेदने । लुनाति-लुनीते। स्तॄञ् १५८२ आच्छादने। स्तृणीति-स्तृणीते। तस्तार। तस्तरतुः। स्तरिता-स्तरीता ।

स्तृणीयात्-स्तृणीत। आशिषि स्तीर्यात्। 'लिङ्सिचोः।' (सू.१५२८) इति वेट्। 'न लिङि' (सू.२५२९)। वॄत इटो लिङि दीर्घो न स्यात्। स्तरिषीष्ट। 'उश्च'(सू.२३६८) इति कित्त्वम्, स्तीर्षीष्ट। 'सिचि च परस्मैपदेषु' (सू.२३९२) इति न दीर्घः, अस्तारीत्। अस्तारिष्टाम्। अस्तरिष्ट-अस्तरीष्ट-अस्तीर्ष्ट। कॄञ् १५८३ हिंसायाम्। कृणाति-कृणीते। चकार-चकरे। वॄञ् १५८४ वरणे। वृणाति-वृणीते। ववार-ववरे। वरिता वरीता। आशिषि 'उदोष्ठ्यपूर्वस्य' (सू.२४९४) वूर्यात्। वरिषीष्ट-वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट-अवरीष्ट-अवूर्ष्ट। धूञ् १५८५ कम्पने। धुनाति-धुनीते। दुधविथ-दुधोथ। दुधुविव। धोता-धविता। 'स्तुसुधूञ्भ्यः-'(सू.२३८५), इतीट्,अधावीत्। अधविष्ट-अधोष्ट।

अथ ल्वादयः ष्णान्ताः परस्मैपदिनः। शॄ १५८६ हिंसायाम्। 'शॄदॄप्रां ह्रस्वो वा' (सू. २४९५)इति ह्रस्वपक्षे यण्। अन्यदा 'ऋच्छत्यॄताम्' (सू. २३८३) इति गुणः। शश्रतुः-शशरतुः। 'श्र्युकः किति' (सू. २३८१) इति निषेधस्य क्रादिनियमेन बाधः। शशरिव-शश्रिव। शरिता-शरीता। शृणीहि। शीर्यात्। अशारिष्टाम्। पॄ १५८७ पालनपूरणयोः। पप्रतुः-पपरतुः। आशिषि पूर्यात्। वॄ १५८८ वरणे। 'भरणे' इत्येके। भॄ १५८९ भर्त्सने। भरणेऽप्येके। मॄ १५९० हिंसायाम्। मृणाति। ममार। दॄ १५९१ विदारणे। ददरतुः-दद्रतुः। दद्रुः। जॄ १५९२ वयोहानौ। 'झॄ १५९३ इत्येके। 'धॄ' १५९४ इत्यन्ये। नॄ १५९५ नये। कॄ १५९६ हिंसायाम्। ॠ १५९७ गतौ। ऋणाति। अराञ्चकार। अरिता-अरीता। आर्णात्। आर्णीताम्। ईर्यात्। आरीत्। आरिष्टाम्, गॄ १५९८ शब्दे। ज्या १५९९ वयोहानौ। 'ग्रहिज्या-' (सू. २४१२)।

२५५९ । हलः ६।४।२। अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते । 'प्वादीनां ह्रस्वः' (सू.२५५८), जिनाति । जिज्यौ । जिज्यतुः । री १६०० गतिरेषणयोः । रेषणं वृकशब्दः । ली १६०१ श्लेषणे । 'विभाषा लीयतेः' (सू.२५०९) इत्येज्विषये आत्वं वा । ललौ-लिलाय । लाता-लेता । व्ली १६०२ वरणे । व्लिनाति । प्ली १६०३ गतौ । वृत् । ल्वादयो वृत्ताः । प्वादयोऽपीत्येके । क्री १६०४ वरणे । भ्री १६०५ भये । 'भरणे' इत्येके । क्षीष् १६०६ हिंसायाम् । एषां त्रयाणां ह्रस्वः । केषाञ्चिन्मते तु न । ज्ञा १६०७ अवबोधने । 'ज्ञाजनोर्जा । (सू.२५११), जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः । बन्ध १६०८ बन्धने । बध्नाति । बबन्धिथ-बबन्थ । बन्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । 'पूर्वत्रासिद्धम्' (सू.१२) इति भष्भावात्पूर्वं 'झलो झलि' (सू.२२८१) इति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न, प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः । वृङ् १६०९ सम्भक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता-वरीता । अवरिष्ट-अवरीष्ट-अवृत ।

श्रन्थ १६१० विमोचनप्रतिहर्षयोः । इतः परस्मैदिनः । श्रथ्नाति । 'श्रन्थिग्रन्थि'—व्याकरणान्तरम्-इत्यादिना कित्त्वपक्षे एत्वाभ्यासलोपावप्यत्र वक्तव्यौ' इति हरदत्तादयः । श्रेथतुः । श्रेथुः । 'इदं कित्त्वं पितामपि' इति सुधाकरमते, श्रेथिथ । अस्मिन्नपि पक्षे णलि शश्राथ । उत्तमे तु 'शश्राथ—शश्रथ' इति माधवः । तत्र मूलं मृग्यम् । मन्थ १६११ विलोडने । श्रन्थ १६१२ ग्रन्थ १६१३ सन्दर्भे । अर्थभेदात् श्रन्थेः पुनः पाठः । रूपं तूक्तम् । कुन्थ १६१४ संश्लेषणे । 'संक्लेशे'

इत्येके । कुथ्नाति । चुकुन्थ । 'कुथ' १६१५ इति दुर्गः । चुकोथ । मृद १६१६ क्षोदे । मृद्नाति । ममर्द । मृड १६१७ च । अयं सुखेऽपि । ष्टुत्वम्, मृड्णाति । गुध १६१८ रोषे । गुध्नाति । कुष १६१९ निष्कर्षे । कुष्णाति । कोषिता ।

२५६० । निरः कुषः ७।२।४६। निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात् । निष्कोषिता—निष्कोष्टा । निरकोषीत्-निरकुक्षत् । क्षुभ १६२० सञ्चलने । 'क्षुभ्नादिषु च' (सू.७९३) क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । चुक्षोभ । णभ १६२१ तुभ १६२२ हिंसायाम् । नभ्नाति । तुभ्नाति । 'नभते' 'तोभते' इति शपि । 'नभ्यति' 'तुभ्यति' इति श्यनि । क्लिशू १६२३ विबाधने । 'शात्' (सू. ११२) इति श्चुत्वनिषेधः, क्लिश्नाति । क्लेशिता–क्लेष्टा । अक्लेशीत्–अक्लिक्षत् । अश १६२४ भोजने । अश्नाति । आश । उध्रस १६२५ उञ्छे । उकार इत् । ध्रस्नाति । उकारो धात्ववयव १६२६ इत्येके । उध्रस्नाति । उध्रसाञ्चकार । इष १६२७ आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । इष्णाति । 'तीषसह'-(सू.२३४०) इत्यत्र सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं न तु इष्यतीष्णात्योरित्याहुः । एषिता । वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः । तथा च वार्तिकम्–*५७० इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः* इति । विष १६२८ विप्रयोगे । विष्णाति । वेष्टा । प्रुष १६२९ प्लुष १६३० स्नेहनसेवनपूरणेषु । प्रुष्णाति । प्लुष्णाति । पुष १६३१ पुष्टौ । पोषिता । मुष १६३२ स्तेये । मोषिता । खच १६३३ भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खच्नाति । वान्तो १६३४ ऽयमित्येके ।

२५६१ । च्छ्वोः शूडनुनासिके च ६।४।१९। सतुकस्य छस्य

वस्य च क्रमात् 'श्' 'ऊठ्' एतावादेशौ स्तोऽनुनासिके कौ झलादौ च-क्ङिति। खौनाति। चखाव। खविता। शानचः परत्वादूठि कृते हल-न्तत्वाभावान्न शानच्, खौनीहि। हेठ १६३५ च। ष्टुत्वम्। हेठ्णाति। ग्रह १६३६ उपादाने। स्वरितेत्। 'ग्रहिज्या—' (सू. २४१२) गृह्णाति-गृह्णीते।

२५६२। ग्रहोऽलिटि दीर्घः ७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। लिटि तु जग्रहिथ। गृह्यात्। ग्रही-षीष्ट। 'ह्मयन्त—' (सू. २२९९) इति न वृद्धिः-अग्रहीत्। अग्रही-ष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत।

इति तिङन्ते क्रयादिप्रकरणम्।

## अथ तिङन्ते चुरादिप्रकरणम्।

चुर १६३७ स्तेये।

२५६३। सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म-वर्णचूर्णचुरादिभ्यो णिच् ३।१।२५। एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे-'(ग) इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थ-म्। चुरादिभ्यस्तु स्वार्थे। 'पुगन्त—' (सू. २१८९) इति गुणः। 'स-नाद्यन्ता—' (सू. २३०४) इति धातुत्वं, गुणायादेशौ। चोरयति।

२५६४। णिचश्च १।३।७४। णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्। चोरयिषीष्ट। 'णिश्रि-'(सू.२३१२) इति चङ्, 'णौ चङि-' (सू.२३१४) इति ह्रस्वः, द्वित्वम्, 'हलादिः शेषः'(सू.२१७९), 'दीर्घो लघोः'( सू.२३१८)। इत्य-भ्यासदीर्घः, अचूचुरत्-अचूचुरत। चिति १६३८ स्मृत्याम्। चिन्तयति। अचिचिन्तत्। 'चिन्त'इति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्।

तेन 'चिन्त्यात्' 'चिन्त्यते' इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके, 'अत एकहल—' (२२६०) इत्यत्र वृत्तिकृता 'जगाण जगणतुः' इत्युदाहृतत्वात् । विशेषापेक्षमित्यपरे । अत एव 'आ धृषाद्वा' (ग) इत्यस्य न वैयर्थ्यम् । यत्रि १६३९ सङ्कोचे । यन्त्रयति । 'यन्त्र' इति पठितुं शक्यम् । यत्तु इदित्करणात् 'यन्त्रति' इति माधवेनोक्तं तच्चिन्त्यम् । एवं कुद्रि-तत्रि-मत्रिषु । स्फुडि १६४० परिहासे । स्फुण्डयति । इदित्करणात् स्फुण्डति । 'स्फुटि' १६४१ इति पाठान्तरम् । स्फुण्टयति । लक्ष १६४२ दर्शनाङ्कनयोः । कुद्रि १६४३ अनृतभाषणे । कुन्द्रयति । लड १६४४ उपसेवायाम् । लाडयति । मिदि १६४५ स्नेहने । मिन्दयति-मिन्दति । ओलडि १६४६ उत्क्षेपणे । ओलण्डयति ओलण्डति । ओकार इत् १६४७ इत्येके । लण्डयति-लण्डति । उकारादिः १६४८ अयमित्यन्ये । उलण्डयति । जल १६४९ अपवारणे । 'लज' १६५० इत्येके । पीड १६५१ अवगाहने । पीडयति ।

**२५६५। भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ७।४।३**

एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत्-अपिपीडत् । नट १६५२ अवस्यन्दने । अवस्यन्दनं नाटयम् । श्रथ १६५३ प्रयत्ने । 'प्रस्थाने' इत्येके । बध १६५४ संयमने । बाधयति । 'बन्ध' १६५५ इति चान्द्रः । पॄ १६५६ पूरणे । पारयति । दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम् । तद्धि सेट्कत्वाय । एवञ्च पृणातिपिपर्तिभ्यां 'परिता' इत्यादि सिद्धावपि 'परति' 'परतः' इत्यादिसिद्धिः फलम् । ऊर्ज १६५७ बलप्राणनयोः । पक्ष १६५८ परिग्रहे । वर्ण १६५९ चूर्ण १६६० प्रेरणे । 'वर्ण वर्णने' इत्येके । प्रथ १६६१ प्रख्याने । प्राथयति । 'नान्ये मितोऽहेतौ' इति वक्ष्यमाणत्वान्नास्य मित्त्वम् ।

२५६६ । अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ७।४।९५। एषामभ्यासस्याकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्त्वापवादः । अपप्रथत् । पृथ १५६२ प्रक्षेपे । पर्थयति ।

२५६७ । उर्ऋत् ७।४।७। उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत्—अपपर्थत् । 'पथ' १६६३ इत्येके । पाथयति । षम्ब १६६४ सम्बन्धने । सम्बयति । अससम्बत् । शम्ब १६६५ च । अशशम्बत् । 'साम्ब' १६६६ इत्येके । भक्ष १६६७ अदने । कुट्ट १६६८ छेदनभर्त्सनयोः । 'पूरणे' इत्येके । कुट्टयति । पुट्ट १६६९ चुट्ट १६७० अल्पीभावे । अट्ट १६७१ षुट्ट १६७२ अनादरे । अट्टयति । अयं दोपधः । ष्टुत्वस्यासिद्धत्वात् 'नन्द्राः—' (सू. १४२८) इति निषेधः, आट्टिटत् । लुण्ठ १६७३ स्तेये । लुण्ठयति । लुण्ठति' इति 'लुठि स्तेये' इति भौवादिकस्य । शठ १६७४ श्वठ १६७५ असंस्कारगत्योः । 'श्वठि' १६७६ इत्येके । तुजि १६७७ पिजि १६७८ हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदित्करणात् तुञ्जति । पिञ्जति । 'तुज' १६७९ 'पिज' १६८० इति केचित् । 'लजि' १६८१ 'लुजि' १६८२ इत्येके । पिस १६८३ गतौ । पेसति । 'पेसयति' इति तु ञ्यपि गतम् । षान्त्व १६८४ सामप्रयोगे । श्वल्क १६८५ वल्क १६८६ परिभाषणे । ष्णिह १६८७ स्नेहने । 'स्फिट' १६८८ इत्येके । स्मिट १६८९ अनादरे । अषोपदेशत्वान्न षः, असिस्मिटत् । 'ष्मिङ्' १६९० अनादरे इत्येके । ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ्, स्माययते । श्लिष १६९१ श्लेषणे । पथि १६९२ गतौ । पन्थयति–पन्थति । पिच्छ १६९३ कुट्टने । छदि १६९४ संवरणे । छन्दयति–छन्दति । श्रण १६९५ दाने । प्रायेणायं विपूर्वः । विश्राणयति । तड १६९६ आघाते । ताडयति । खड १६९७

खडि १६९८ कडि १६९९ भेदने। खाडयति। खण्डयति। कण्डयति। कुडि १७०० रक्षणे। गुडि १७०१ वेष्टने। 'रक्षणे' इत्येके। 'कुठि' १७०२ इत्यन्ये। अवकुण्ठयति। अवकुण्ठति। 'गुठि' १७०३ इत्यपरे। खुडि १७०४ खण्डने। वठि १७०५ विभजने। वडि' १७०६ इत्येके। मडि १७०७ भूषायां हर्षे च। भडि १७०८ कल्याणे। छर्द १७०९ वमने। पुस्त १७१० बुस्त १७११ आदरानादरयोः। चुद १७१२ सञ्चोदने। नक्क १७१३ धक्क १७१४ नाशने। णोपदेश लक्षणे पर्युदस्तोऽयम्। प्रनक्कयति। चक्क १७१५ चुक्क १७१६ व्यथने। क्षल १७१७ शौचकर्मणि। तल १७१८ प्रतिष्ठायाम्। तुल १७१९ उन्माने। तोलयति। अतूतुलत्। कथं 'तुलयति तुलना' इत्यादि?–'अतुलोपमाभ्यां–' (सू. ६३१) इति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच्। दुल १७२० उत्क्षेपे। पुल १७२१ महत्त्वे। चुल १७२२ समुच्छ्राये। मूल १७२३ रोहणे। कल १७२४ विल १७२५ क्षेपे। बिल १७२६ भेदने। तिल १७२७ स्नेहने। चल १७२८ भृतौ। पाल १७२९ रक्षणे। लूष १७३० हिंसायाम्। शुल्ब १७३१ माने। शूर्प १७३२ च। चुट १७३३ छेदने। मुट १७३४ संचूर्णने। पडि १७३५ पसि १७३६ नाशने। पण्डयति–पण्डति। पंसयति पंसति। व्रज १७३७ मार्गसंस्कारगत्योः। शुल्क १७३८ अतिस्पर्शने। चपि १७३९ गत्याम्। चम्पयति चम्पति। क्षपि १७४० क्षान्त्याम्। क्षम्पयति–क्षम्पति। छजि १७४१ कृच्छ्रजीवने। श्वर्त १७४२ गत्याम्। श्वभ्र १७४३ च। ज्ञप १७४४ मिच्च। अयं ज्ञाने ज्ञापने च वर्तते।

२५६८। मितां ह्रस्वः ६।४।९२। मितामुपधाया ह्रस्वः स्याण्णौ परे। ज्ञपयति। यम १७४५ च परिवेषणे। चान्मित्। परिवेषणमिह वेष्टनम्; न तु भोजना, नापि वेष्टना। यमयति चन्द्रम्। 'परिवेष्टते'

इत्यर्थः। चह १७४६ परिकल्कने। चहयति। अचीचहत्। कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ च। अचचहत्। 'चप' १७४७ इत्येके। चपयति। 'रह १७४८ त्यागे' इत्येके। अरीरहत्। कथादेस्तु अररहत्। बद १७४९ प्राणने। बलयति। चिञ् १७५० चयने।

२५६९। चिस्फुरोर्णौ ६।१।५४। आत्त्वं वा स्यात्।

२५७०। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ७।३।३६। चपयति- चययति। ञित्करणसामर्थ्यादस्य णिज्विकल्पः। चयति- चयते। प्रणिचयति-प्रनिचयति। नान्ये मितोऽहेतौ (ग)। अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न। घट्ट १७५१ चलने। मुस्त १७५२ सङ्घाते। खट्ट १७५३ संवरणे। षट्ट १७५४ स्फिट्ट १७५५ चुबि १७५६ हिंसायाम्। पुल १७५७ सङ्घाते। 'पूर्ण' १७५८ इत्येके। 'पुण' १७५९ इत्यन्ये। पुंस १७६० अभिवर्धने। टकि १७६१ बन्धने। टङ्कयति-टङ्कति। धूस १७६२ कान्तिकरणे। धूसयति। दन्त्यान्तः। 'मूर्धन्यान्तः' १७६३ इत्येके। 'तालव्यान्तः' १७६४ इत्यपरे। कीट १७६५ वर्णे। चूर्ण १७६६ सङ्कोचने। पूज १७६७ पूजायाम्। अर्क १७६८ स्तवने। 'तपने' इत्येके। शुठ १७६९ आलस्ये। शुठि १७७० शोषणे। शुण्ठयति-शुण्ठति। जुड १७७१ प्रेरणे। गज १७७२ मार्ज १७७३ शब्दार्थौ। गाजयति। मार्जयति। मर्च १७७४ च। मर्चयति। घृ १७७५ प्रस्रवणे। 'स्रावणे' इत्येके। पचि १७७६ विस्तारवचने। पञ्चयति। 'पञ्चते' इति व्यक्तार्थस्य ऽपि गतम्। तिज १७७७ निशाने। तेजयति। कृत १७७८ संशब्दने।

२५७१। उपधायाश्च ७।१।१०१। धातोरुपधाभूतस्य ऋत इत्स्यात्।

रपरत्वम् । 'उपधायां च' (सू.२२६५)इति दीर्घः। कीर्तयति। 'उऋत्'(सू.
२५६७) अचीकृतत्-अचिकीर्तत् । वर्ध १७७९ छेदनपूरणयोः । कुबि
१७८० आच्छादने । कुम्बयति । कुभि १७८१ इत्येके । लुबि १७८२
तुबि १७८३ अदर्शने । 'अर्दने' इत्येके । ह्लप १७८४ व्यक्तायां
वाचि । 'क्लृप' १७८५ इत्येके । चुटि १७८६ छेदने । इल १७८७ प्रेरणे ।
एलयति । ऐलिलत् । म्रक्ष १७८८ म्लेच्छने । म्लेच्छ १७८९ अव्य-
क्तायां वाचि । ब्रूस १७९० बर्ह १७९१ हिंसायाम् । केचिदिह 'गर्ज
१७९२ गर्द १७९३ शब्दे' । 'गर्ध १७९४ अभिकाङ्क्षायाम्' इति
पठन्ति । गुर्द १७९५ पूर्वनिकेतने । जसि १७९६ रक्षणे । 'मोक्षणे' इति
केचित् । जंसयति-जंसति । ईड १७९७ स्तुतौ । जसु १७९८ हिंसा-
याम् । पिडि १७९९ सङ्घाते । रुष १८०० रोषे । 'रुट' १८०१
इत्येके । डिप १८०२ क्षेपे । ष्टुप १८०३ समुच्छ्राये ।

आकुस्मादात्मनेपदिनः । 'कुस्मनाम्नो वा' इति वक्ष्यते, तम-
भिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् । चित १८०४ सञ्चेतने ।
चेतयते । अचीचितत । दशि १८०५ दंशने । दंशयते । अददंशत । इदि-
त्त्वाण्णिजभावे-दंशति । 'आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैव' इति
व्याख्यातारः । नलोपे सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम् । दसि १८०६
दर्शनदंशनयोः । दंसयते-दंसति । दस १८०७ इत्यप्येके । डप १८०८
डिप १८०९ सङ्घाते । तत्रि १८१० कुटुम्बधारणे । तन्त्रयते । चान्द्रास्तु
धातुद्वयमिति मत्वा १८११ 'कुटुम्बयते' इत्युदाहरन्ति । मत्रि १८१२
गुप्तपरिभाषणे । स्पश १८१३ ग्रहणसंश्लेषणयोः । तर्ज १८१४ भर्त्स
१८१५ तर्जने । बस्त १८१६ गन्ध १८१७ अर्दने । बस्तयते । गन्धयते ।
विष्क १८१८ हिंसायाम् । 'हिष्क' १८१९ इत्येके । निष्क १८२० परि-

माणे। लल १८२१ ईप्सायाम्। कूण १८२२ सङ्कोचे। तूण १८२३ पूरणे। भ्रूण। १८२४ आशाविशङ्कयोः। शठ १८२५ श्लाघायाम्। यक्ष १८२६ पूजायाम्। स्यम १८२७ वितर्के। गूर १८२८ उद्यमने। शम १८२९ लक्ष १८३० आलोचने। 'नान्ये मितः–' इति मित्त्वनिषेधः। शामयते। कुत्स १८३१ अवक्षेपणे। त्रुट १८३२ छेदने। 'कुट' १८३३ इत्येके। गल १८३४ स्रवणे। भल १८३५ आभण्डने। कूट १८३६ आप्रदाने। 'अवसादने' इत्येके। कुट्ट १८३७ प्रतापने। वञ्चु १८३८ प्रलम्भने। वृष १८३९ शक्तिबन्धने। शक्तिबन्धनं प्रजननसामर्थ्यं शक्तिसम्बन्धश्च। वर्षयते। मद १८४० तृप्तियोगे। मादयते। दिवु १८४१ परिकूजने। गृ १८४२ विज्ञाने। गारयते। विद १८४३ चेतनाख्याननिवासेषु। वेदयते।

'सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्॥'

मान १८४४ स्तम्भे। मानयते। यु १८४५ जुगुप्सायाम्। यावयते। '**कुस्म नाम्नो वा**' (ग) कुस्म १८४६ इति धातुः कुत्सितस्मयने वर्तते। कुस्मयते। अचुकुस्मत। अथवा 'कुस्म' इति यनेतिपदिकम्। ततो धात्वर्थे णिच्। इत्याकुस्मीयाः।

चर्च १८४७ अध्ययने। बुक्क १८४८ भषणे। शब्द १८४९ उपसर्गादाविष्कारे च। चाद्भाषणे। प्रतिशब्दयति। प्रतिश्रुतमाविष्करोतीत्यर्थः। '**अनुपसर्गाच्च**' (ग) आविष्कारे इत्येव। शब्दयति। कण १८५० निमीलने। कणयति। 'णौ चङ्युपधाया ह्रस्वः' (सू. २३१४) '**काण्यादीनां वा**' (वा. ५७३) इति विकल्प्यते। अचीकणत्–अचकाणत्। जभि १८५१ नाशने। जम्भयति–जम्भति। षूद १८५२ क्षरणे। सूदयति। असूषुदत्। जसु

१८५३ ताडने । जासयति–जसति । पश १८५४ बन्धने । पाशयति । अम १८५५ रोगे । आमयति । 'नान्ये मितः–' इति निषेधः । 'अम्' गत्यादौ शपि गतः । तस्माद्धेतुमण्णौ **'न कम्यमिचमाम्' (ग)** इति निषेधः । आमयति । चट १८५६ स्फुट १८५७ भेदने । विकासे शशपोः 'स्फुटति' 'स्फोटते' इत्युक्तम् । घट १८५८ सङ्घाते । घाटयति । **'हन्त्यर्थाश्च' (ग)** नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्ते इत्यर्थः । दिभु १८५९ मर्दने । उदित्त्वात् । 'देवति' इत्यपि । अर्ज १८६० प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । घुषिर् १८६१ विशब्दने । घोषयति । 'घुषिरविशब्दने' ( सू. ३०६३ ) इति सूत्रे 'अविशब्दने' इति निषेधाल्लिङ्गादनित्योऽस्य णिच्, घोषति । इरित्त्वादङ् वा, अघुषत्–अघोषीत् । ण्यन्तस्य तु अजूघुषत् । आङः क्रन्द १८६२ सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थ उक्तः, स एव आङ् पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु 'आङ्पूर्वो घुषिः क्रन्द-सातत्ये' इत्याहुः । आघोषयति । लस १८६३ शिल्पयोगे । तसि १८६४ भूष १८६५ अलङ्करणे । अवतंसयति–अवतंसति । भूषयति । अर्ह १८६६ पूजायाम् । ज्ञा १८६७ नियोगे । आज्ञापयति । भज १८६८ विश्राणने । शृधु १८६९ प्रसहने । अशशर्धत्–अशीशृधत् । यत १८७० निकारोपस्कारयोः । रक १८७१ लग १८७२ आस्वादने । 'रघ' १८७३ इत्येके । 'रग' १८७४ इत्यन्ये । अञ्चु १८७५ विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम् , अत एव विभाषितो णिच् , अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । लिगि १८७६ । चित्री-करणे । लिङ्गयति–लिङ्गति । मुद १८७७ संसर्गे । मोदयति सक्तून् घृतेन । त्रस १८७८ धारणे । 'ग्रहणे' इत्येके । 'वारणे' इत्यन्ये । उध्रस १८७९ उञ्छे । उकारो धात्ववयव इत्येके । न १८८० इत्यन्ये । ध्रासयति ।

उध्रासयति। मुच १८८१ प्रमोचने मोदने च। वस १८८२ स्नेहच्छेदापहरणेषु। चर १८८३ संशये। च्यु १८८४ सहने। 'हसने च' इत्येके। च्यावयति। 'च्युस' १८८५ इत्येके। च्योसयति। भुवो १८८६ ऽवकल्कने। अवकल्कनं मिश्रीकरणमित्येके। चिन्तनमित्यन्ये। भावयति। कृपेश्च १८८७। कल्पयति।

'आ स्वदः सकर्मकात्' (ग)। स्वदिमभिव्याप्य सम्भवत्कर्मभ्य एव णिच्। ग्रस १८८८ ग्रहणे। ग्रासयति फलम्। पुष १८८९ धारणे। पोषयत्याभरणम्। दल १८९० विदारणे। दालयति। पट १८९१ पुट १८९२ लुट १८९३ कुट(१८९३) तुजि १८९४ मिजि १८९५ पिजि १८९६ लुजि १८९७ भजि १८९८ लघि १८९९ त्रसि १९०० पिसि १९०१ कुसि १९०२ दशि १९०३ कुशि १९०४ घट १९०५ घटि १९०६ बृहि १९०७ बर्ह १९०८ बल्ह १९०९ गुप १९१० धूप १९११ विच्छ १९१२ चीव १९१३ पुथ १९१४ लोकृ १९१५ लोचृ १९१६ णद १९१७ कुप १९१८ तर्क १९१९ वृतु १९२० वृधु १९२१ भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति - तुञ्जति। एवं परेषाम्। घाटयति। घण्टयति।

२५७२। नाग्लोपिशास्वृदिताम् ७।४।२। णिच्यग्लोपिनः शास्तेः ऋदितां चोपधाया ह्रस्वो न स्याच्चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्तयति। वर्धयति। उदित्त्वात् वर्तति, वर्धति। रुट १९२२ लजि १९२३ अजि १९२४ दसि १९२५ भृशि १९२६ रुशि १९२७ शीक १९२८ रुसि १९२९ नट १९३० पुटि १९३१ जि १९३२ चि १९३३ रघि १९३४ लघि १९३५ अहि १९३६ रहि १९३७ महि १९३८ च। लडि १९३९ नडि १९४० मल १९४१ च। पूरी १९४२ आप्यायने। ईदित्त्वं निष्ठायामिण्निषेधाय। अत एव णिज्वा। पूरयति—

पूरति । रुज १९४३ हिंसायाम् । ष्वद १९४४ आस्वादने । 'स्वाद' इत्येके । असिष्वदत् । दीर्घस्य त्वषोपदेशत्वात् असिस्वदत् । इत्थाः स्वदीयाः ।

'आ धृषाद्वा' (ग) । इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । युज १९४५ पृच १९४६ संयमने । योजयति—योजति । अयौक्षीत् । पर्चयति-पर्चति । पर्चिता । अपर्चीत् । अर्च १९४७ पूजायाम् । षह १९४८ मर्षणे । साहयति । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' । ईर १९४९ क्षेपे । ली १९५० द्रवीकरणे । लाययति-लयति । लेता । वृजी १९५१ वर्जने । वर्जयति-वर्जति । वृञ् १९५२ आवरणे । वारयति-वरति-वरते । वरिता-वरीता । जॄ १९५३ वयोहानौ । जारयति-जरति । जरिता-जरीता । ज्रि १९५४ च । ज्राययति-ज्रयति । ज्रेता । रिच १९५५ वियोजनसम्पर्चनयोः । रेचयति-रेचति । रेक्ता । शिष १९५६ असर्वोपयोगे । शेषयति-शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । तप १९५७ दाहे । तापयति—तपति । तप्ता । तृप १९५८ तृप्तौ । 'सन्दीपने' इत्येके । तर्पयति । तर्पति-तर्पिता । छृदी १९५९ संदीपने । छर्दयति-छर्दति । छर्दिता । छर्दिष्यति । 'सेऽसिचि-' ( सू. २५०६ ) इति विकल्पो न, साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् । 'चृप १९६० छृप १९६१ दृप १९६२ संदीपने' इत्येके । चर्पयति । छर्पयति । दृभी १९६३ भये । दर्भयति-दर्भति । दर्भिता । दृभ १९६४ संदर्भे । अयं तुदादावीदित् । श्रथ १९६५ मोक्षणे । 'हिंसायाम्' इत्येके । मी १९६६ गतौ । माययति-मयति । मेता । ग्रन्थ १९६७ बन्धने । ग्रन्थयति-ग्रन्थति । शीक १९६८ आमर्षणे । चीक १९६९ च । अर्द १९७० हिंसायाम् । स्वरितेत् । अर्दयति-अर्दति । अर्दते । हिसि । १९७१ हिंसायाम् ।

हिंसयति— हिंसति। 'हिनस्ति' इति श्नमि गतम्। अर्ह १९७२ पूजायाम्। आङः षद १९७३ पद्यर्थे। आसादयति-आसीदति। 'पाघ्रा-' (सू. २३६०) इति सीदादेशः, आसत्ता। आसात्सीत्। शुन्ध १९७४ शौचकर्मणि। शुन्धिता। अशुन्धीत्। अशुन्धिष्टाम्। छद १९७५ अपवारणे। स्वरितेत्। जुष १९७६ परितर्कणे। परितर्कणमूहो हिंसा वा। 'परितर्पणे' इत्यन्ये। परितर्पणं परितृप्तिक्रिया। जोषयति-जोषति। प्रीतिसेवनयोः 'जुषते' इति तुदादौ। धूञ् १९७७ कम्पने। णावित्यधिकृत्य ॐ५७१ धूञ्प्रीञोर्नुग्वक्तव्यः ॐ। धूनयति, धवति-धवते। केचित्तु 'धूञ्प्रीणोः-' इति पठित्वा प्रीणातिसाहचर्याद् धुनोतेरेव नुकमाहुः। धावयति। अयं स्वादौ क्र्यादौ च, स्वादौ ह्रस्वश्च। तथा च कविरहस्ये—

> 'धूनोति चम्पकवनानि धुनोत्यशोकं
> चूतं धुनाति धुवति स्फुटितातिमुक्तम्।
> वायुर्विधूनयति चम्पकपुष्परेणून्
> यत्कानने धवति चन्दनमञ्जरीश्च।'

प्रीञ् १९७८ तर्पणे। प्रीणयति। 'धूञ्प्रीणोः-' इति हरदत्तोक्त पाठे तु प्राययति-प्रयति-प्रयते। श्रन्थ १९७९ ग्रन्थ १९८० सन्दर्भे। आप्लृ १९८१ लम्भने। आपयति-आपति। आपत्। आप्ता। स्वरितेदयमित्येके। आपते। तनु १९८२ श्रद्धोपकरणयोः। 'उपसर्गाच्च दैर्घ्ये' (ग)। तानयति, वितानयति—तनति, वितनति। 'चन १९८३ श्रद्धोपहननयोः, इत्येके। चानयति—चनति। वद १९८४ सन्देशवचने। वादयति। स्वरितेत्, वदति-वदते। 'अनुदात्तेत्' इत्येके। ववदतुः। ववदिथ।

वन्दे । वद्यात् । वच १९८५ परिभाषणे । वाचयति-वचति । वक्ता । अवाक्षीत् । मान १९८६ पूजायाम् । मानयति-मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे 'मानयते' । इत्याकुस्मीयाः । 'मन्यते' इति दिवादौ । 'मनुते इति तनादौ च । भू १९८७ प्राप्तावात्मनेपदी । भावयते-भवते । णिच्सन्नियोगेनैवात्मनेपदमित्येके। भवति । गर्ह १९८८ विनिन्दने । मार्ग १९८९ । अन्वेषणे । कठि १९९० शोके। उत्पूर्वोऽयमुत्कण्ठायाम् । 'कण्ठते' इत्यात्मनेपदी गतः । मृजू १९९१ शौचालङ्कारयोः । मार्जयति-मार्जति । मार्जिता-मार्ष्टा । मृष १९९२ तितिक्षायाम् । स्वरितेत् । मर्षयति । मर्षति-मर्षते । 'मृष्यति' 'मृष्यते' इति दिवादौ । सेचने शपि 'मर्षति' । धृष १९९३ प्रसहने। धर्षयति धर्षति । इत्याधृषीयाः ।

**अथादन्ताः ।** कथ १९९४ वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः, कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ, अचकथत् । वर १९९५ ईप्सायाम् । वरयति । 'वारयति' इति गतम् । गण १९९६ सङ्ख्याने । गणयति ।

**२५७३ । ई च गणः ७।४।९७ ।** गणेरभ्यासस्य ईत्स्याच्चङ्परे णौ । चादत् । अजीगणत्-अजगणत् । शठ १९९७ श्वठ १९९८ सम्यगवभाषणे । पट १९९९ वट २००० ग्रन्थे । रह २००१ त्यागे । अररहत् । स्तन २००२ गदी २००३ देवशब्दे । स्तनयति । गदयति । अजगदत् । पत २००४ गतौ वा । वा णिजन्तः । 'वा अदन्त' इत्येके । आद्ये-पतयति-पतति । पताञ्चकार । अपतीत् । द्वितीये पातयति, अपीपतत् । पष २००५ अनुपसर्गात् । गतावित्येव । पषयति । स्वर २००६ आक्षेपे । स्वरयति । रच २००७ प्रतियत्ने । रचयति ।

कल २००८ गतौ संख्याने च । चह २००९ परिकल्कने । परिकल्कनं दम्भः शाठ्यं च । मह २०१० पूजायाम् । महयति । 'महति' इति शपि गतम् । सार २०११ कृप २०१२ श्रथ २०१३ दौर्बल्ये । सारयति । कृपयति । श्रथयति । स्पृह २०१४ ईप्सायाम् । भाम २०१५ क्रोधे । अबभामत् । सूच २०१६ पैशुन्ये । सूचयति । अषोपदेशत्वान्न षः, असूसुचत् । खेट २०१७ भक्षणे । 'तृतीयान्त' २०१८ इत्येके । 'खोट' २०१९ इत्यन्ये । क्षोट २०२० क्षेपे । गोम २०२१ उपलेपने । अजुगोमत् । कुमार २०२२ क्रीडायाम् । अचुकुमारत् । शील २०२३ उपधारणे । उपधारणमभ्यासः । साम २०२४ सान्त्वप्रयोगे । अससामत् । 'साम सान्त्वने' इत्यतीतस्य तु असीषमत् । वेल २०२५ कालोपदेशे । वेलयति । 'काल' २०२६ इति पृथग्धातुरित्येके । कालयति । पल्यूल २०२७ लवनपवनयोः । वात २०२८ सुखसेवनयोः । 'गतिसुखसेवनेषु' इत्येके । वातयति । अववातत् । गवेष २०२९ मार्गणे । अजगवेषत् । वास २०३० उपसेवायाम् । निवास २०३१ आच्छादने । अनिनिवासत् । भाज २०३२ पृथक्कर्मणि । सभाज २०३३ प्रीतिदर्शनयोः । 'प्रीतिसेवनयोः' इत्यन्ये । सभाजयति । ऊन २०३४ परिहाणे । ऊनयति । 'ओः पुयण्जि—' ( सू. २५७७ ) इति सूत्रे 'पययोः' इति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गं–'णिचि अच आदेशो न स्याद् द्वित्वे कार्ये' इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते, तत्रैवायं निषेधः, ज्ञापकस्य सजातीयापेक्षत्वात् । तेन 'अचिकीर्तत्' इति सिद्धम् । प्रकृते तु 'न'शब्दस्य द्वित्वम् । तत उत्तरखण्डेऽल्लोपः । औननत् । मा भवान् ऊननत् ।

ध्वन २०३५ शब्दे। अदध्वनत्। कूट २०३६ परितापे। 'परिदाहे' इत्यन्ये। सङ्केत २०३७ ग्राम २०३८ कुण २०३९ गुण २०४० चामन्त्रणे। चात्कूटोऽपि। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। पाठान्तरम्—केत २०४१ श्रावणे निमन्त्रणे च। केतयति निकेतयति। कुण गुण चामन्त्रणे। चकारात्केतने। कूण २०४२ सङ्कोचनेऽपि—इति। स्तेन २०४३ चौर्ये। अतिस्तेनत्।

**आ गर्वादात्मनेपदिनः।** पद २०४४ गतौ। पदयेते। अपपदत। गृह २०४५ ग्रहणे। गृहयते। मृग २०४६ अन्वेषणे। मृगयते। 'मृग्यति' इति कण्ड्वादिः। कुह २०४७ विस्मापने। शूर २०४८ वीर २०४९ विक्रान्तौ। स्थूल २०५० परिबृंहणे। स्थूलयते। अतुस्थूलत। अर्थ २०५१ उपयाच्ञायाम् ? अर्थयते। आर्तथत। सत्र २०५२ सन्तानक्रियायाम्। अससत्रत। अनेकाच्त्वान्न षोपदेशः। सिसत्रयिषते। गर्व २०५३ माने। गर्वयते। अदन्तत्वसामर्थ्याण्णिज्विकल्पः। धातोरन्त उदात्तः, लिटि आम् च फलम्। एवमग्रेऽपि-**इत्यागर्वीयाः।**

सूत्र २०५४ वेष्टने। सूत्रयति। असुसूत्रत। मूत्र २०५५ प्रस्रवणे। मूत्रयति—मूत्रति। रूक्ष २०५६ पारुष्ये। पार २०५७ तीर २०५८ कर्मसमाप्तौ। अपपारत। अतितीरत। पुट २०५९ संसर्गे। पुटयति। 'धेक २०६० दर्शने' इत्येके। अदिधेकत। कत्र २०६१ शैथिल्ये। कत्रयति—कत्रति। 'कर्त' २०६२ इत्यप्येके। कर्तयति—कर्तति। **'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' ( ग )।** प्रातिपदिकाद्धात्वर्थे णिच्स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे पटयति। परत्वाद् वृद्धौ सत्यां टिलोपः। अपीपटत्। 'णौ चङि'—

(सू. २३१४) इत्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीयान्' इति स्थितम्। अपपटत्। **'तत्करोति तदाचष्टे' (ग)**। पूर्वस्य प्रपञ्चः। 'करोति' 'आचष्टे' इति धात्वर्थमात्रं णिजर्थः। लडर्थस्त्वविवक्षितः। **'तेनातिक्रामति' (ग)**। अश्वेनातिक्रामति अश्वयति। हस्तिनाऽतिक्रामति हस्तयति। **'धातुरूपं च' (ग)**। णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथा च वार्तिकम्—**ॐ५७२ आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्ॐ** इति। कंसवधमाचष्टे कंसं घातयति। इह 'कंसं हन्-इ' इति स्थिते।

**२५७४। हनस्तोऽचिण्णलोः ७।३।३२।** हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति। नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता। ततश्चाड्द्वित्वयोर्दोषः। किञ्च कुत्वतत्त्वे न स्याताम्, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्। सत्यम्, 'प्रकृतिवच्च' इति चकारो भिन्नक्रमः। कारकं च चात्कार्यम। हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्त्वादि तदिहापीत्यर्थः। कंसमजीघतत्। **'कर्तृकरणाद्धात्वर्थे' (ग)**। कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः। असिना हन्ति असयति। वष्क २०६३ दर्शने। चित्र २०६४ चित्रीकरणे। 'आलेख्यकरणे'इत्यर्थः। कदाचिद्दर्शने। चित्र' इत्ययमद्भुतदर्शने णिचं लभते। चित्रयति। अंस २०६५ समाघाते। वट २०६६ विभाजने। लज २०६७ प्रकाशने। 'वटि' २०६८ 'लजि' २०६९ इत्येके। वण्टयति। लञ्जति। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये। वण्टापयति। लञ्जापयति। शाकटायनस्तु कथादीनां सर्वेषां पुकमाह। तन्मते 'कथापयति' 'गणापयति' इत्यादि। मिश्र २०७०

सम्पर्क। संग्राम २०७१ युद्धे। अयमनुदात्तेत, अकारप्रश्लेषात।
असंसङ्ग्रामत। स्तोम २०७२ श्लाघायाम्। अतुस्तोमत। छिद्र
२०७३। कर्भेदने। करणभेदने' इत्यन्ये। 'कर्ण' २०७४ इति धात्व-
न्तरमित्यन्ये। अन्ध २०७५ दृष्ट्युपघाते। 'उपसंहारे' इत्यन्ये। आन्द-
धत्। दण्ड २०७६ दण्डनिपातने। अङ्क २०७७ पदे लक्षणे च।
आञ्चकत। अङ्ग २०७८ च। आञ्जगत। सुख २०७९ दुःख २०८०
तत्क्रियायाम्। रस २०८१ आस्वादनस्नेहनयोः। व्यय २०८२ वित्त-
समुत्सर्गे। अवव्ययत। रूप २०८३ रूपक्रियायाम्। रूपस्य दर्शनं
करणं वा रूपक्रिया। छेद २०८४ द्वैधीकरणे। अचिच्छेदत। 'छद
२०८५ अपवारणे' इत्येके। छदयति। लाभ २०८६ प्रेरणे। व्रण
२०८७ गात्रविचूर्णने। वर्ण २०८८ वर्णक्रियाविस्तारगुणवचनेषु।
वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृ-
णातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः। **'बहुलमेतन्निद-
र्शनम्' (ग)**। अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि
बोध्याः। तद्यथा—पर्ण २०८९ हरितभावे। अपपर्णत। विष्क
२०९० दर्शने। क्षप २०९१ प्रेरणे। वस २०९२ निवासे।
तुत्थ २०९३ आवरणे। एवम् आन्दोलयति २०९४ प्रेङ्खोल-
यति २०९५ विडम्बयति २०९६ अवधीरयति २०९७ इत्यादि। अन्ये
तु 'दशगणीपाठो बहुलम्' इत्याहुः। तेनापठिता अपि सौत्रलौकिक-
वैदिका बोध्याः। अपरे तु 'नवगणीपाठो बहुलम्' इत्याहुः। तेनापठि-
तेभ्योऽपि क्वचित्स्वार्थे णिच्, **'रामो राज्यमचीकरत'** इति यथे-
त्याहुः। 'चुरादिभ्य एव बहुलं णिजित्यर्थः' इत्यन्ये। सर्वे पक्षाः प्राचां
ग्रन्थे स्थिताः। **'णिङङ्गान्निरसने' (ग)**। अङ्गवाचिनः प्रातिपदि-

कान्निरसनेऽर्थे णिङ् स्यात् । हस्तौ निरस्यति हस्तयते । पादयते । 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' (ग) । श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते, णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । अश्वतरमाचष्टे अश्वयते । गालोडितं वाचां विमर्शः, तत्करोति गालोडयते । आह्वरयते । केचित्तु णिचमेवानुवर्तयन्ति । तन्मते परस्मैपदमपि । पुच्छादिषु 'धात्वर्थे' इत्येव सिद्धम् । णिजन्तादेव बहुलवचनादात्मनेपदमस्तु । मास्तु 'पुच्छभाण्ड—' ( सू. २६७६ ) इति णिङ्विधिः । सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः ।

इति तिङन्ते चुरादिप्रकरणम् ।

## अथ तिङन्ते णिच्प्रकरणम् ।

२५७५ । **तत्प्रयोजको हेतुश्च १।४।५५** । कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ।

२५७६ । **हेतुमति च ३।१।२६** । प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच्स्यात् । भवन्तं प्रेरयति भावयति । 'णिचश्च' ( सू. २५६४ ) इति कर्तृगे फले आत्मनेपदम् । भावयते । भावयाम्बभूव ।

२५७७ । **ओः पुयण्ज्यपरे ७।४।८०** । सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूञ्-अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् ।

२५७८ । **स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ७।४।८१** । एषामभ्यासोकारस्य इत्त्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे । असिस्रवत्—असुस्रवत् । 'नाग्लोपि—' ( सू. २५७० )

इति ह्रस्वनिषेधः, अशशासत् । अडुढौकत् । अचीचकासत् । मतान्तरे—अचकासत् । 'अग्लोपि' इति तु सुब्धातुप्रकरणे उदाहरिष्यते । ण्यन्ताण्णिच्, पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः, चोरयति । 'णौ चङि—' ( सू. २३१४ ) इति ह्रस्वः, 'दीर्घो लघोः' ( सू. २३१८ ), न चाग्लोपित्वात् द्वयोरप्यसम्भवः, ण्याकृतिनिर्देशात् ; अचूचुरत् ।

२५७९ । **णौ च संश्चङोः** ६।१।३१ । सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात् । **'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्'** ( प० १२९ ) इति वचनात्सम्प्रसारणं, पूर्वरूपम् , अशूशवत् । अलघुत्वान्न दीर्घः, अशिश्वयत् ।

२५८० । **स्तम्भुसिवुसहां चङि** ८।३।११६ । उपसर्गस्थान्निमित्तादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् । आटिटत् । आशिशत् । बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव, ओणेॠदित्करणाल्लिङ्गात् । मा भवान् इदिधत् । एजादावेधतौ विधानान्न वृद्धिः । मा भवान् प्रेदिधत् । 'नन्द्राः—' ( सू. २४४६ ) इति नदराणां न द्वित्वम् , औन्दिदत् । आड्डिडत् । आर्चिचत् । 'उब्ज आर्जवे' । उपदेशे दकारोपधः । 'भुजन्युब्जौ पाण्युपतापयोः' ( सू. २८७७ ) इति सूत्रे निपातनाद्दस्य बः । स चान्तरङ्गोऽपि द्वित्वविषये 'नन्द्रा—' ( सू. २४४६ ) इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते; न तु ततः प्राक् , दकारोच्चारणसामर्थ्यात् । औब्जिजत् । अजादेरित्येव । नेह–अदिद्रपत् ।

२५८१ । **रभेरशब्लिटोः** ७।१।६३ । रभेर्नुम्स्यादचि न तु शब्लिटोः ।

२५८२। लभेश्च ७।१।६४। अरारम्भत। अललम्भत। 'हेरचङि' (सू. १५३१) इति सूत्रे 'अचङि' इत्युक्तेः कुत्वं न। अजीहयत। 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' (सू. २५६६)। असस्मरत। अददरत। तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः।

२५८३। विभाषा वेष्टिचेष्ट्योः ७।४।९६। अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ। अववेष्टत–अविवेष्टत। अचचेष्टत–अचिचेष्टत। 'भ्राजभास—' (सू. २५६५) इत्यादिना वोपधाह्रस्वः, अबिभ्रजत्–अबभ्राजत। ॐ५७३ काण्यादीनां वेति वक्तव्यम्ॐ। ण्यन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः षड् भाष्ये उक्ताः। ह्वायिवाणिलोटिलोपयश्चत्वारोऽधिका न्यासे। 'चाणिलोटी' इत्यप्यन्यत्र। इत्थं द्वादश। अचीकणत्- अचकाणत।

२५८४। स्वापेश्चङि ६।१।१८। ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात्। असूषुपत्।

२५८५। शाच्छासाह्वाव्यावेपां युक् ७।३।३७। णौ। पुकोऽपवादः। शाययति। ह्वाययति।

२५८६। ह्वः सम्प्रसारणम् ६।१।३२। सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात्। अजूहवत्–अजुहावत्।

२५८७। लोपः पिबतेरीच्चाभ्यासस्य ७।४।४। पिबतेरुपधाया लोपः स्यात्, अभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। 'अर्तिह्री–' (सू० २५७०) इति पुक्, अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। यलोपः, क्नोपयति। क्ष्मापयति। स्थापयति।

२५८८। तिष्ठतेरित् ७।४।५। उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्।

२५८९ । जिघ्रतेर्वा ७।४।६ । अजिघ्रिपत्–अजिघ्रपत् 'उर्ऋत्' (सू. २५६७ )। अचीकृतत्–अचिकीर्तत् । अवीवृतत्–अववर्तत् । अमीमृजत्–अममार्जत् । ॐ५७४ पातेर्णौ लुग्वक्तव्यः ॐ । पुकोऽपवादः । पालयति ।

२५९० । वो विधूनने जुक् ७।३।३८। वातेर्जुक्स्याण्णौ कम्पेऽर्थे । वाजयति । 'कम्पे' किम् ? केशान्वापयति । 'विभाषा लीयतेः' ( सू. २५०९ ) ।

२५९१ । लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने ७।३।३९। लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे । विलीनयति-विलाययति । विलालयति–विलापयति वा घृतम् । 'ली' 'ई'इति ईकारप्रश्लेषादात्त्वपक्षे नुग्न । 'स्नेहद्रवे'किम् ? लोहं विलापयति । ॐ५७५ । प्रलम्भनाभिभवपूजासु लियो नित्यमात्वमशिति वाच्यम् ॐ ।

२५९२ । लियः सम्माननशालिनीकरणयोश्च १।३।७० । लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते । वञ्चयतीत्यर्थः ।

२५९३ । बिभेतेर्हेतुभये । ६।१।५६ । बिभेतेरेच आत्त्वं वा स्यात्प्रयोजकाद्भयं चेत् ।

२५९४ । भीस्म्योर्हेतुभये १।३।६८ । ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ । सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डो भापयते ।

२५९५ । भियो हेतुभये षुक् ७।३।४० । 'भी' 'ई' इति ईकारः प्रश्लिष्यते । ईकारान्तस्य भियः षुक्स्याण्णौ हेतुभये । भीषयते ।

२५९६ । नित्यं स्मयतेः ६।१।५७ । स्मयतेरेचो नित्यमात्वं

स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते । हेतोश्चेद्भयस्मयावित्युक्तेर्नेह-कुञ्चिकयैनं-भाययति, विस्माययति । कथं तर्हि 'विस्मापयन्विस्मितमात्मवृत्तौ' इति । 'मनुष्यवाचा' इति करणादेव हि तत्र स्मयः । अन्यथा शानजपि स्यात् ? सत्यम् , 'विस्माययन्' इत्येव पाठ इति साम्प्रदायिकाः । यद्वा, मनुष्यवाक् प्रयोज्यकर्त्री-विस्मापयते, तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ 'शता' इति व्याख्येयम् ।

२५९७ । **स्फायो वः** ७।३।४१ । णौ । स्फावयति ।

२५९८ । **शदेरगतौ तः** ७।३।४२ । शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ । शातयति । गतौ तु गाः शादयति गोविन्दः । यमयतीत्यर्थः ।

२५९९ । **रुहः पोऽन्यतरस्याम्** ७।३।४३ । णौ रोपयति-रोहयति ।

२६०० । **क्रीङ्जीनां णौ** ६।१।४८ । एषामेच आत्त्वं स्याण्णौ । क्रापयति । जापयति । अध्यापयति ।

२६०१ । **णौ च संश्चङोः** २।४।५१ । सन्परे चङ्परे च णौ इङो गाङ् वा स्यात् । अध्यजीगपत्-अध्यापिपत् ।

२६०२ । **सिध्यतेरपारलौकिके** ६।१।४९ । ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्त्वं स्याण्णौ । अन्नं साधयति । निष्पादयतीत्यर्थः । 'अपारलौकिके' किम् ? तापसः सिध्यति, तत्त्वं निश्चिनोति । तं प्रेरयति 'सेधयति' तापसं तपः ।

२६०३ । **प्रजने वीयतेः** ६।१।५५ । अस्यैच आत्त्वं स्याण्णौ प्रजनेऽर्थे । वापयति-वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः । 'ऊदुपधाया गोहः' ( सू. २३६४ ), गूहयति ।

२६०४ । **दोषो णौ** ६।४।९० । 'दुषः' इति सुवचम् । दुष्यते-

रुपधाया ऊत्स्याण्णौ । दूषयति ।

२६०५ । वा चित्तविरागे ६।४।९१ । विरागोऽप्रीतता । चित्तं दूषयति–दोषयति वा कामः । 'मितां ह्रस्वः' ( सू. २५५८ ) । भ्वादौ चुरादौ च मित उक्ताः । घटयति । 'जनीजृष् ' (ग) जनयति । जरयति । जृणातेस्तु जारयति । ॐ५७६ रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः ॐ । मृगरमणमाखेटकम् । रजयति मृगान् । 'मृग' इति किम् ? रञ्जयति पक्षिणः । रमणादन्यत्र तु–रञ्जयति मृगान् तृणदानेन । चुरादिषु ज्ञपादिश्चित्र् । 'चिस्फुरोर्णौ' ( २५६९ ) । चपयति–चययतीत्युक्तम् । चिनोतेस्तु चापयति–चाययति । स्फारयति–स्फोरयति । अपुस्फरत्–अपुस्फुरत् ।

२६०६ । उभौ साभ्यासस्य ८।४।२१ । साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् ।

२६०७ । णौ गमिरबोधने २।४।४६ । इणो गमिः स्याण्णौ । गमयति । बोधने तु प्रत्याययति । 'इण्वदिकः' (वा० ५५९ ) । अधिगमयति । 'हनस्तोऽचिण्णलोः' ( सू. २५७४ ) । 'हो हन्तेः' ( सू. ३५८ ) इति कुत्वम्–घातयति । ॐ५७७ ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् ॐ । तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये तु 'अजादेर्द्वितीयस्य' ( सू. २१७६ ) इत्यस्यापवादतया सन्नन्ते प्रवर्तते । ऐर्ष्यियत्–ऐर्ष्यिष्यत् । द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते, हलादिः शेषात् । द्वित्वं तु द्वितीयस्यैव, तृतीयाभावेन प्रकृतवार्त्तिकाप्रवृत्तेः । निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वं सूह्यम् । इति तिङन्ते णिच्प्रकरणम् ।

## अथ तिङन्ते सन्प्रकरणम्

**२६०८। धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७।** इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहितत्वादिह सन आर्धधातुकत्वम्, इट्, द्वित्वम, 'सन्यतः' (सू. २३१७), पठितुमिच्छति पिपठिषति। 'कर्मणः' किम्? गमनेनेच्छतीति करणान्माभूत्। 'समानकर्तृकात्' किम्? शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात्पक्षे वाक्यमपि। 'लुङ्सनोर्घस्ल' (सू० २४२७), 'एकाच उपदेशे—' (सू. २२४६ इति नेट्, सस्य तत्त्वम्। अत्तुमिच्छति = जिघत्सति। 'ईर्ष्यतेस्तृतीयस्य' (वा ५७७। इति यिसनोर्द्वित्वम्। ईर्ष्यियिषति-ईर्ष्यिषिषति।

**२६०९। रुदविदमुषग्रहिस्वपिप्रच्छः संश्च १।२।८।** एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति।

**२६१०। सनि ग्रहगुहोश्च ७।२।१२।** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात्। 'ग्रहिज्या–' (सू. २४१२) इति सम्प्रसारणम्। सनः षत्वस्यासिद्धत्वाद्भष्भावः। जिघृक्षति। जुघुक्षति।

**२६११। किरश्च पञ्चभ्यः ७।२।७५।** 'कॄ' 'गॄ' 'दृङ्' 'धृङ्' 'प्रच्छ्' एभ्यः सन इट् स्यात्। पिपृच्छिषति। चिकरिषति। जिगरिषति-जिगलिषति। **अन्नेटो दीर्घो नेष्टः (भा० इ०)।** दिदरिषते। दिधरिषते। कथम् 'उद्दिधीर्षुः' इति? भौवादिकयोर्धृङ्धृञोरिति गृहाण।

**२६१२। इको झल् १।२।९।** इगन्ताज्झलादिः सन्कित्स्यात्। बुभूषति। दीङ्, दातुमिच्छति दिदीषते। एज्विषयत्वाभावात् 'मीनातिमिनोति—' (सू० २५०८) इत्यात्वं न। अत एव 'सनि मीमा–' (सू. २६२३) इति सूत्रे माधातोः पृथङ् मीग्रहणं कृतम्।

२६१३ । **हलन्ताच्च १।२।१०।** इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । गुहू, जुघुक्षति । बिभित्सति । 'इकः' किम् ? यियक्षते । 'झल्' किम् ? विवर्धिषते । हल्ग्रहणं जातिपरम् । तृहू, तितृक्षति-तितृंहिषति ।

२६१४ । **अज्झनगमां सनि ६।४।१६।** अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । 'सन्लिटोर्जेः' ( सू० २३३१ ), जिगीषति । 'विभाषा चेः' ( सू० २५२५ ), चिकीषति-चिचीषति। जिघांसति ।

२६१५ । **सनि च २।४।४७।** इणो गमिः स्यात्सनि, न तु बोधने। जिगमिषति । बोधने प्रतीषिषति । 'इणवदिकः' ( वा० ५५९ ), अधिजिगमिषति । कर्मणि तङ् । 'परस्मैपदेषु' इत्युक्तेर्नेट्, 'झलादौ सनि' इति दीर्घः, जिगांस्यते अधिजिगांस्यते । अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः, जिगंस्यते । सञ्जिगंसते ।

२६१६ । **इङश्च २।४।४८।** इङो गमिः स्यात्सनि । अधिजिगांसते ।

२६१७ । **रलो व्युपधाद्धलादेः संश्च १।२।२६।** उश्च इश्च वी । ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । 'द्युतिस्वाप्योः सम्प्रसारणम्' (२३४४)। दिद्युतिषते-दिद्योतिषते । रुरुचिषते-रुरोचिषते । लिलिखिषति-लिलेखिषति । रलः' किम् ? दिदेविषति । 'व्युपधात्' किम् ? विवर्तिषते । हलादेः किम् ? एषिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम्, ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात् ।

२६१८ । **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ७।२।४९।** इवन्तेभ्यः ऋधादिभ्यश्च सन इड् वा स्यात् । इडभावे 'हल-

न्ताच्च' (सू० २६१३) इति कित्त्वम्, 'च्छ्वोः—' (सू० २५६१) इति वस्य ऊठ्, यण्, द्वित्वम्, दुद्यूषति-दिदेविषति। 'स्तौतिण्योरेव-' (सू० २६२७) इति वक्ष्यमाणनियमान्न षः, सुस्यूषति-सिसेविषति।

२६१९। आप्ज्ञप्यृधामीत् ७।४।५५। एषामच ईत्स्यात्सादौ सनि।

२६२०। अत्र लोपोऽभ्यासस्य ७।४।५८। 'सनि मीमा-' (सू० २६२३) इत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात्। आप्तुमिच्छति, ईप्सति। अर्धितुमिच्छति, रपरत्वम्, चर्त्वम्, ईर्त्सति-अर्दिधिषति। बिभ्रज्जिषति-बिभर्जिषति-बिभ्रक्षति-बिभर्क्षति।

२६२१। दम्भ इच्च ७।४।५६। दम्भेरच इत्स्यादीच्च सादौ सनि। अभ्यासलोपः, 'हलन्ताच्च (सू० २६१३) इत्यत्र हल्ग्रहणं जातिपरमित्युक्तम्, तेन सनः कित्त्वान्नलोपः, धिप्सति—धीप्सति-दिदम्भिषति। शिश्रीषति-शिश्रयिषति। 'उदोष्ठ्यपूर्वस्य' (सू० २४९४) सुस्वूर्षति—सिस्वरिषति। युयूषति यियविषति। ऊर्णुनूषति—ऊर्णुनुविषति—ऊर्णुनविषति। न च परत्वाद् गुणावादेशयोः सतोऽभ्यासे उकारो न श्रूयेतेति वाच्यम्, 'द्विर्वचनेऽचि' (सू० २२४३ इति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा। नच सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम्, 'कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते, न त्वननुभवन्नपि' (प० ११)। न चेह सन् द्वित्वमनुभवति। बुभूर्षति—बिभरिषति। ज्ञपिः पुगन्तो मित्संज्ञः पकारान्तश्चौरादिकश्च, इडभावे 'इको झल्' (सू० २६१२) इति कित्त्वान्न गुणः, 'अज्झन-' (सू० २६१४) इति दीर्घः परत्वाण्णिलोपेन बाध्यते; 'आप्ज्ञप्-' (सू० २६१९) इति ईत्, ज्ञीप्सति—

जिज्ञपयिषति । अमितस्तु जिज्ञापयिषति । 'जनसन-' ( सू०२५०४ ) इत्यात्त्वम् , सिषासति-सिसनिषति । ॐ५७८ तनिपतिदरिद्राति- भ्यः सनो वा इड् वाच्यः ॐ ।

२६२२ । तनोतेर्विभाषा ६।४।१७। अस्योपधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति-तितंसति- तितनिषति । ॐ५७९ आशङ्कायां सन्वक्तव्यः ॐ । श्वा मुमूर्षति । कूलं पिपतिषति ।

२६२३ । सनि मीमाघुरभलभशकपतपदामच इस् ७।४।५४ एषामच इस्स्यात्सादौ सनि । अभ्यासलोपः 'स्कोः-' ( सू० ३८० ) इति सलोपः । पित्सति। दिदरिद्रिषति-दिदरिद्रासति । 'डुमिञ्' 'मीञ्' आभ्यां सन् , कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषादिस् । 'सः सि-' ( सू० २३४२ ) इति तः, मित्सति-मित्सते । 'मा माने' मित्सति । माङ्मेङोः-मित्सते । दोदाणोः-दित्सति । देङ्-दित्सते । दाञ्-दित्सति-दित्सते । धेट् , धित्सति । धाञ् , धित्सति-धित्सते । रिप्स-ते । लिप्सते । शक्लृ, शिक्षति । 'शक मर्षणे' इति दिवादिः स्वरितेत्, शिक्षति-शिक्षते । पित्सते । ॐ ५८० राधो हिंसायां सनीस् वाच्यः ॐ । रित्सति । 'हिंसायाम्' किम् ? आरिरात्सति ।

२६२४ । मुचोऽकर्मकस्य गुणो वा ७।४।५७। सादौ सनि । अभ्यासलोपः, मोक्षते-मुमुक्षते वा वत्सः स्वयमेव । 'अकर्मकस्य' किम् ? मुमुक्षति वत्सं कृष्णः । 'न वृद्भ्यश्चतुर्भ्यः' ( सू० २३४८ ) इति विवृत्सति । तङि तु विवर्तिषते । 'सेऽसिचि-' ( सू० २५०६ ) इति वेट् , निनर्तिषति-निनृत्सति ।

२६२५ । इट् सनि वा ७।२।४१ । वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा स्यात् । तितरिषति-तितरीषति-तितीर्षति । विवरिषति-

विवरीषति-वुवूर्षति । वृङ्, वुवूर्षते-विवरिषते । दुध्वूर्षति ।

२६२६। **स्मिपूङ्रञ्ज्वशां सनि ७।२।७४।** 'स्मिङ्' 'पूङ्' 'ऋ' 'अञ्जू' 'अश्' एभ्यः सन इङ् स्यात्। सिस्मयिषते । पिपविषते । अरिरिषति । इह 'रिस्' शब्दस्य द्वित्वम् । 'इस्' इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगात् 'द्विर्वचनेऽचि' (सू. २२४३) इति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । 'उभौ साभ्यासस्य' ( सू. २६०६ ) प्राणिणिषति । उच्छेरतुक्, चुत्वम्, 'पूर्वत्रासिद्धीयमद्वित्वे' (प १२८) इति चछाभ्यां सहितस्येटो द्वित्वम्, 'हलादिः शेषः' ( सू. २१७९ ), उचिच्छिषति । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति त्वनित्यम्, 'च्छ्वोः' (सू. २५६१) इति सतुक्ग्रहणाज्ज्ञापकात्। 'प्रकृतिप्रत्यापत्ति' ( वा० ५७२ ) वचनाद्वा । 'णौ च संश्चङोः' ( सू. २५७९ ) (सू. २६०१) इति सूत्राभ्यामिङो गाङ्, श्वयतेः सम्प्रसारणं च वा। अधिजिगापयिषति-अध्यापिपयिषति । शिश्वाययिषति-शुशावयिषति । 'ह्वः सम्प्रसारणम्' ( सू. २५८६ ), जुहावयिषति । 'णौ द्वित्वात्प्रागच आदेशो न' इत्युक्त्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । 'ओः पुयण्ज्यपरे' ( सू. २५७७ ), पिपावयिषति । यियावयिषति । बिभावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । 'पुयण्जि' किम् ? नुनावयिषति । 'अपरे' किम् ? बुभूषति । 'स्रवति–' ( सू. २५८७ ) इतीत्वं वा, सिस्रावयिषति-सुस्रावयिषति । इत्यादि । 'अपरे' इत्येव, शुश्रूषते ।

२६२७। **स्तौतिण्योरेव षण्यभ्यासात् ८।३।६१।** अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्षभूते सनि, नान्यत्र ।

तुष्टूषति। 'धुतिस्वाप्योः–' ( सू० २३४४ ) इत्युत्वम्, सुष्वापयिषति। सिषाधयिषति। 'स्तौतिण्योः' किम् ? सिसिक्षति। उपसर्गात्तु 'स्थादिष्वभ्यासेन च–' ( सू० २२७७ ) इति षत्वम्, परिषिषिक्षति। 'षणि' किम् ? तिष्ठासति। सुषुप्सति। अभ्यासादित्युक्तेर्नेह निषेधः, इण्, प्रतीषिषति। इक्, अधीषिषति।

२६२८। सः स्विदिस्वदिसहीनां च ८।३।६२। अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव, न षः–षणि परे। सिस्वेदयिषति। सिस्वादयिषति। सिसाहयिषति। 'स्थादिष्वेवाभ्यासस्य' इति नियमान्नेह–अभिसुसूषति।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥ (भा० इ०)

शैषिकाच्छैषिकः सरूपो न। तेन 'शालीये भवः' इति वाक्यमेव, न तु छान्ताच्छः। 'सरूपः' किम् ? अहिच्छत्रे भव आहिच्छत्रः। आहिच्छत्रेभव आहिच्छत्रीयः, अणन्ताच्छः। तथा मत्वर्थात्सरूपः स न, धनवानस्यास्ति–इह मतुबन्तान्मतुब्न। विरूपस्तु स्यादेव, दण्डिमती शाला। 'सरूपः' इत्यनुषज्यते। अर्थद्वारा सादृश्यं तस्यार्थः। तेन इच्छासन्नन्तात्सन्न। स्वार्थसन्नन्तात्तु स्यादेव, जुगुप्सिषते, मीमांसिषते।

इति तिङन्ते सन्प्रकरणम्।

## अथ तिङन्ते यङ्प्रकरणम्।

२६२९। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२। पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः, तस्मिन् द्योत्ये यङ् स्यात्।

२६३०। गुणो यङ्लुकोः ७।४।८२। अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। 'सनाद्यन्ताः–' (सू० २३०४) इति धातुत्वाल्लडादयः।

ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट । 'धातोः' किम् ? आर्धधातुकत्वं यथा स्यात् । तेन 'भुवो वचिः' ( सू० २४५२,इत्यादि । 'एकाचः' किम् ? पुनःपुनर्जागर्ति । 'हलादेः किम् ? भृशमीक्षते । 'भृशं शोभते, रोचते, इत्यत्र यङ् न' इति भाष्यम् पौनःपुन्ये तु स्यादेव, रोरुच्यते । शोशुभ्यते ।

※५८१ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः※ । आद्याक्षयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । अनेकाच्कत्वेनाषोपदेशत्वात्षत्वं न । मोमूत्र्यते ।

२६३१ । यस्य हलः ६।४।४९ । 'यस्य' इति सङ्घातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । 'आदेः परस्य'(सू.४४)। 'अतो लोपः' (सू० २३०८) । सोसूचाञ्चक्रे । सोसूचिता । सोसूत्रिता । मोमूत्रिता ।

२६३२ । दीर्घोऽकितः ७।४।८३ । अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । अटाट्यते ।

२६३३ । यङि च ७।४।३० । अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि यङ्लुकि च । यकारपररेफस्य न द्वित्वनिषेधः, 'अरार्यते' इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते । बेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः, बेभिदिता ।

२६३४ । नित्यं कौटिल्ये गतौ ३।१।२३ । गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते ।

२६३५ । लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ३।१।२४ । एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति-लोलुप्यते । सासद्यते ।

२६३६। चरफलोश्च ७।४।८७। अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः। 'नुक्' इत्यनेनानुस्वारो लक्ष्यते। ॐ५८२ स च पदान्तवद्वाच्यः॥। 'वा पदान्तस्य' ( सू. १२५ ) इति यथा स्यात्।

२६३७। उत्परस्यातः ७।४।८८। चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः। 'हलि च' ( सू. ३५४ ) इति दीर्घः। चंचुर्यते-चञ्चूर्यते। फम्फुल्यते-पंफुल्यते।

२६३८। जपजभदहदशभञ्जपशां च ७।४।८६। एषामभ्यासस्य नुक् स्याद्यङ्लुकोः। गर्हितं जपति जञ्जप्यते इत्यादि।

२६३९। ग्रो यङि। ८।२।२०। गिरते रेफस्य लत्वं स्याद्यङि। गर्हितं गिलति जेगिल्यते। 'घुमास्था' (सू. २४६२) इतीत्वम्, गुणः, देदीयते। पेपीयते। सेषीयते। 'विभाषा श्वेः' ( सू. २४२० ) शोशूयते-शेश्वीयते। 'यङि च' (सू. २६३३), सास्मर्यते। 'रीङृतः' (सू० १२३६ ), चेक्रीयते। सुट्-सञ्चेस्क्रीयते।

२६४०। सिचो यङि ८।३।११२। सिचः सस्य षो न स्याद्यङि। निसेसिच्यते।

२६४१। न कवतेर्यङि ७।४।६३। कवतेरभ्यासस्य चुत्वं न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु चोकूयते।

२६४२। नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ७।४।८४। एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः। 'अकितः' इत्युक्तेर्न दीर्घः, नलोपः, वनीवच्यते। सनीस्रस्यते। इत्यादि।

२६४३। नुगतोऽनुनासिकान्तस्य ७।४।८५। अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। नुका अनुस्वारो लक्ष्यते इत्युक्तम्। यँय्यम्यते-यंयम्यते। तपरत्वसामर्थ्याद् भूतपूर्व-

दीर्घस्यापि न, 'भाम' क्रोधे, बाभाम्यते। 'ये विभाषा' सू. २३१९), जाजायते-जञ्जन्यते। ॐ५८३हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः॥। जेघ्नीयते। 'हिंसायां' किम्? जङ्घन्यते।

२६४४। रीगृदुपधस्य च ७।४।९०। ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः। वरीवृत्यते। क्षुभ्नादित्वान्न णः, नरीनृत्यते। जरीगृह्यते। उभयत्रलत्वम्, चल्लीक्लृप्यते। ॐ५८४ रीगृत्वत इति वक्तव्यम्॥। परीपृच्छ्यते वरीवृश्च्यते।

२६४५। स्वपिस्यमिव्येञां यङि ६।१।१९। सम्प्रसारणं स्याद्यङि। सोषुप्यते सेसिम्यते। वेवीयते।

२६४६। न वशः ६।१।२०। वावश्यते।

२६४७। चायः की ६।१।२१। चेकीयते।

२६४८। ई घ्राध्मोः ७।४।३१। जेघ्रीयते। देध्मीयते।

२६४९। अयङ् यि क्ङिति ७।४।२२। शीङोऽयङादेशः स्यात् यादौ क्ङिति परे। शाशय्यते। अभ्यासस्य ह्रस्वः, ततो गुणः, डोढौक्यते। तोत्रौक्यते।

इति तिङन्ते यङ्प्रकरणम्।

## अथ तिङन्ते यङ्लुक्प्रकरणम्।

२६५०। यङोऽचि च २।४।७४। यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनाऽपि बहुलं लुक्स्यात्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात्कर्तरि—' (सू. २१५९) इति परस्मैपदम्। 'अनुदात्तङितः-' (सू. २१५७) इति तु न, ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि प्रत्ययस्यासाधारणं

रूपमाश्रीयते तत्रैव तत् । अत एव 'सद्दषत्प्रासादः' इत्यत्र 'अत्वसन्तस्य—' ( सू० ४२५ ) इति दीर्घो न । येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न, 'अनुदात्तङितः—' ( सू० २१५७ ) इत्यनुबन्धनिर्देशात् । तत्र च 'श्तिपा शपा—' ( प० १३३ ) इति निषेधात् । अत एव श्यन्नादयो न, गणेन निर्देशात् । किन्तु शबेव । 'चर्करीतं च' इत्यादौ पाठाच्छपो लुक् ।

२६५१ । यङो वा ७।३।९४ । यङन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । 'भूसुवोः—' ( सू० २२२४ ) इति गुणनिषेधो यङ्लुकि भाषायां न, '-बोभूतु तेतिक्ते' ( सू०३५९३ ) इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुक्यप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम्, 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात्' ( प० १०२ ), 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात् । बोभवीति—बोभोति । बोभूतः । बोभुवति । बोभवाञ्चकार । बोभविता । अबोभवीत्-अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयास्ताम् । 'गातिस्था-' (सू०२२२३) इति सिचो लुक्, 'यङो वा' ( सू० २६५१ ) इतीट्पक्षे गुणं बाधित्वा नित्यत्वाद् वुक्, अबोभूवीत्-अबोभूत् । अबोभूताम् । अभ्यस्ताश्रयो जुस्, नित्यत्वाद् वुक्, अबोभूवुः । अबोभविष्यत् । इत्यादि । पास्पर्धीति-पास्पर्द्धि । पास्पर्द्धः । पास्पर्धति । पास्पर्त्सि । 'झलो झलि' ( सू० २४२५ ), पास्पर्धि । लङ्, अपास्पर्त्—अपास्पर्द् । सिपि 'दश्च' ( सू० २४६८ ) इति रुत्वपक्षे 'रो रि' ( सू० १७३ ) अपास्पाः । जागाद्धि । जाघात्सि । अजाघात् । सिपि रुत्वपक्षे—अजाघाः । नाधृ, नानाद्धि । नानात्तः । दध, दादद्धि । दादद्धः । दाधत्सि ।

अदाधत्। अदादधुः। अदाधः-अदाधत्। लुङि—अदादाधीत्-अदादधीत्। चोस्कुन्दीति-चोस्कुन्ति। अचोस्कुन्। अचोस्कुन्ताम्। अचोस्कुन्दुः। मोमुदीति-मोमोत्ति। मोमोदाञ्चकार। मोमोदिता। अमोमुदीत् अमोमोत्। अमोमुत्ताम्। अमोमुदुः। अमोमुदीः-अमोमोः-अमोमोत्। लुङि गुणः, अमोमोदीत्। चोकूर्ति-चोकूर्दीति। लङ्, तिप्, अचोकूर्त् अचोकूर्दीत्। सिप्पक्षे-अचोकूः। अचोखूः। अजोगूः। वनीवञ्चीति-वनीवङ्क्ति। वनीवक्तः। वनीवचति। अवनीवञ्चीत्-अवनीवन्। जङ्गमीति-जङ्गन्ति। 'अनुदात्तोपदेश—' ( सू० २४२८ ) इत्यनुनासिकलोपः, जङ्गतः। जङ्गमति। 'म्वोश्च' ( सू० २३०९ )-जङ्गन्मि। जङ्गन्वः। एकाज्ग्रहणेनोक्तत्वान्नेण्णिषेधः, जङ्गमिता। अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक्, जङ्गहि। 'मो नो धातोः' ( सू० ३४१ ), अजङ्गन्। अनुबन्धनिर्देशान्न च्लेरङ्, 'ह्मयन्त—' ( सू० २२९९ ) इति न वृद्धिः, अजङ्गमीत्। अजङ्गमिष्टाम्। हन्तेर्यङ्लुक्। 'अभ्यासाच्च' ( सू० २४३० ) इति कुत्वम्। यद्यपि 'हो हन्तेः-' ( सू० ३५८ ) इत्यतो 'हन्तेः' इत्यनुवर्त्य विहितम्, तथापि यङ्लुकि भवत्येवेति न्यासकारः। 'श्तिपा शपा' ( प० १३३ ) इति निषेधस्त्वनित्यः, 'गुणो यङ्लुकोः' ( सू० २६३० ) इति सामान्यापेक्षज्ञापकादिति भावः। जङ्घनीति। जङ्घन्ति। जङ्घतः। जङ्घ्नति। जङ्घनिता। श्तिपा निर्देशाज्जादेशो न, जङ्घहि। अजङ्घनीत्-अजङ्घन्। जङ्घन्यात्। आशिषि तु—वध्यात्। अवधीत्। अवधिष्टाम् इत्यादि। वधादेशस्य द्वित्वन्तु न भवति, स्थानिवत्त्वेन 'अनभ्यासस्य' इति निषेधात्। तद्धि समानाधिकरणं धातोर्विशेषणम्, बहुव्रीहिबलात्। आङ्-पूर्वात्तु 'आङो यमहनः' ( सू० २६९५ ) इत्यात्मनेपदम्। आजङ्घते। इत्यादि। 'उत्परस्य—' ( सू० २६३७ ) इति तपर

त्वान्न गुणः। 'हलि च' (सू० ३५४) इति दीर्घस्तु स्यादेव, तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्। चञ्चुरीति-चञ्चूर्ति। चञ्चूर्तः। चञ्चुरति। अचञ्चुरीत्, अचञ्चूः। चङ्घनीति-चङ्घन्ति। 'जनसन—' (सू० २५०४) इत्यात्त्वम्, चङ्घातः। 'गमहन—' (सू० २३६३) इत्युपधालोपः, चङ्घ्नति। चङ्घाहि। चङ्घनानि। अचङ्घनीत्—अचङ्घन्। अचङ्घाताम्। अचङ्घ्नुः। 'ये विभाषा' (सू० २३१९), चङ्घायात् चङ्घन्यात्। अचङ्घनीत्-अचङ्घानीत्। 'उतो वृद्धिः—' (सू० २४४३) इत्यत्र 'नाभ्यस्तस्य' इत्यनुवृत्तेरुतो वृद्धिर्न, योयोति-योयवीति। अयोयवीत्-अयोयोत्। योयुयात्। आशिषि दीर्घः, योयूयात्। अयोयावीत्। नोनवीति-नोनोति। जाहेति-जाहाति। 'ईहल्यघोः' (सू० २४९७), जाहीतः। इह 'जहातेश्च' (सू० २५९८) 'आ च हौ' (सू० २४९९) 'लोपो यि' (सू० २५००) 'घुमास्था' (सू० २४६२) 'एर्लिङि' (सू० २३७४) इत्येते पञ्चापि न भवन्ति, श्तिपा निर्देशात्। जाहति। जाहासि—जाहेषि। जाहीथ। जाहीथ। जाहीहि। अजाहेत् अजाहात्। अजाहीताम्। अजाहुः। जाहीयात्। आशिषि-जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्। लुका लुप्ते प्रत्ययलक्षणाभावात् 'स्वपिस्यमि—' (सू० २६४५) इत्युत्त्वं न, 'रुदादिभ्यः—' (सू० २४७४) इति गणनिर्दिष्टत्वादिण्न, सास्वपीति-सास्वप्ति। सास्वप्तः। सास्वपति। असास्वपीत्-असास्वप्। सास्वप्यात्। आशिषि तु 'वचिस्वपि—' (सू० २४०९) इत्युत्त्वम्, सासुप्यात्। असास्वापीत्-असास्वपीत्।

२६५२। रुग्रिकौ च लुकि ७।४।९१। ऋदुपधस्य धातोरभ्यासस्य 'रुक्' 'रिक्' 'रीक्' एते आगमाः स्युर्यङ्लुकि।

२६५३ । ऋतश्च ७।४।९२। ऋदन्तधातोरपि तथा। वर्वृतीति-वरिवृतीति-वरीवृतीति। वर्वर्ति-वरिवर्ति-वरीवर्ति। वर्वृतः ३। वर्वृतति ३। वर्वर्तामास ३। वर्वर्तिता ३। गणनिर्दिष्टत्वात् 'न वृद्भ्यश्चतुर्भ्यः' (सू० २३४८) इति न, वर्वर्तिष्यति ३। अवर्वृतीत् ३। अवर्वत् ३। सिपि-'दश्च' (सू० २४६८) इति रुत्वपक्षे 'रो रि-' (सू० १७३)-अवर्वाः ३। गणनिर्दिष्टत्वादङ् न, अवर्वर्तीत् ३। चर्करीति ३। चर्कर्ति-चरिकर्ति-चरीकर्ति। चर्कृतः ३। चेक्रति ३। चर्कराञ्चकार ३। चर्करिता ३। अचर्करीत्। अचर्कः ३। चर्कृयात्। ३। आशिषि रिङ्, चर्क्रियात् ३। अचर्कारीत् ३। 'ऋतश्च' (सू० २६५३) इति तपरत्वान्नेह-'कॄ विक्षेपे'। चाकर्ति। तातर्ति। तातीर्तः। तातिरति। तातीर्हि। तातराणि। अतातरीत्-अतातः। अतातीर्ताम्। अतातरुः। अतातारीत्। अतातारिष्टाम्। इत्यादि। अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्त्वं रपरत्वम्। 'हलादिः शेषः' (सू० २१७९), ... । रिग्रीकोस्तु 'अभ्यासस्यासवर्णे' (सू० २२९०) इति इयङ्। अरर्ति-अरियर्ति। अररीति-अरियरीति। अरृतः-अरियृतः। झि अते। यण्। रुको 'रो रि' (सू० १७३) इति लोपः। न च तस्मिन्कर्तव्ये यणः स्थानिवत्त्वम्, पूर्वत्रासिद्धे तन्निषेधात्। आरति अरियृति। लिङि श्तिपा निर्देशात् 'गुणोऽर्ति-' (सू० २३८०) इति गुणो न। रिङ्। रलोपः। दीर्घः। आरियात्-अरियियात्। आरारीत्-आरियारीत्। 'गृहू ग्रहणे'। 'जर्गृहीति। जर्गर्ढि ३। जर्गृढः ३। जर्गृहति ३। अजर्घट् ३। गृह्णातेस्तु जाग्रहीति-जाग्राढि। तदादौ ङिन्निमित्तं सम्प्रसारणम्। तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः। जागृढः। जागृहति। जाग्रहीषि-जाघ्रक्षि। लुटि जाग्रहिता। 'ग्रहोऽलिटि'-(सू० २५६२) इति दीर्घस्तु

न, तत्र 'एकाचः' इत्यनुवृत्तेः । माधवस्तु दीर्घमाह । तद्भाष्यविरुद्धम् । जर्गृधीति ३ । जर्गर्द्धि ३ । जर्गृद्धः ३ । जर्गृधति ३ । जर्गृधीषि ३ । जर्घर्त्सि ३ । अजर्गृधीत् । ईडभावे गुणः । हल्ङ्यादिलोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घर्त् ३ । अजर्गृद्धाम् ३ । सिपि 'दश्च' (सू० २४६८) इति पक्षे रुत्वम् । अजर्घाः ३ । अजर्गर्धीत् ३ । अजर्गर्धिष्टाम् ३ । पाप्रच्छीति–पाप्रष्टि । तसादौ 'ग्रहिज्या–' ( सू० २४१४ ) इति सम्प्रसारणं न भवति, श्तिपा निर्देशात् । 'च्छ्वोः शूड्—' ( सू० २५६१ ) इति शः, 'व्रश्च–' ( सू० २९४ ) इति षः, पाप्रष्टः । पाप्रच्छति । पाप्रश्मि । पाप्रच्छ्वः । पाप्रश्मः । **'यकारवकारान्तानां तु ऊठ्भाविनां यङ्लुङ् नास्ति' इति 'च्छ्वोः—' ( सू० २५६१ ) इति सूत्रे भाष्ये ध्वनितं, कैयटेन च स्पष्टीकृतम् ।** इदं च 'च्छ्वोः–' ( सू० २५६१ ) इति यत्रोठ् तद्विषयकम् । 'ज्वरत्वर–' (सू० २६५४) इत्यूठ्भाविनोः स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम् , माधवादिसम्मतं च । 'मव्य बन्धने' । अयं यान्त ऊठ्भावी । 'तेवृ देवृ देवने' इत्यादयो वान्ताः । इय गतौ, जाइयीति–जाइति । जाइतः । जाइयति । जाइयीषि—जाइसि । वलि लोपे यञादौ दीर्घः, जाइामि । जाइावः । जाइामः । इर्य गतिकान्त्योः जाइर्यीति । जाइर्ति । जाइर्तः । जाइर्यति । लोटि–जाइर्हि । अजाइः । अजाइर्ताम् । अजाइर्युः । मव बन्धने ।

**२६५४ । ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च ६।४।२०।** ज्वरादीनामुपधावकारयोरूठ् स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये । अत्र 'क्ङिति' इति नानुवर्तते, अवतेस्तुनि 'ओतुः' इति दर्शनात् । अनुनासिकग्रहणं चानुवर्तते, अवतेर्मनिन्प्रत्यये तस्य टिलोपे 'ओम्' इति दर्शनात् । ईडभावे ऊठि पिति गुणः, मामोति–मामवीति ।

मामूतः । मामवति । मामोषि । मामोमि । मामावः । मामूमः । मामोतु-मामूतात् । मामूहि । मामवानि । अमामोत्-अमामोः । अमामवम् । अमामाव । अमामूम । तुर्वी हिंसायाम् । तोतूर्वीति ।

२६५५ । राल्लोपः ६।४।२१। रेफात्परयोश्छ्वोर्लोपः स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये । इति वलोपः । लघूपधगुणः ।

२६५६ । न धातुलोप आर्धधातुके १।१।४। धात्वंशलोपनिमित्ते आर्धधातुके परे इको गुणवृद्धी न स्तः । इति नेह निषेधः, तिबादीना मनार्धधातुकत्वात् । तातोर्ति । 'हलि च' ( सू. ३५४ इति दीर्घः, तोतूर्तः । तोतूर्वति । तोथोर्ति । दोदोर्ति । दोधोर्ति । मुर्च्छा' मोमोर्ति । मोमूर्तः । मोमूर्च्छति । इत्यादि । 'आर्धधातुके' इति विषयसप्तमी । तेन यङि विवक्षिते अजेर्वी-वेवीयते । अस्य यङ्लुङ् नास्ति, लुङापहरे विषयत्वासम्भवेन वीभावस्याप्रवृत्तेः ।

इति तिङन्ते यङ्लुक्प्रकरणम् ।

## अथ तिङन्ते नामधातुप्रकरणम् ।

२६५७ । सुप आत्मनः क्यच् ३।१।८। इषिकर्मणः एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्प्रत्ययो वा स्यात् । धात्ववयवत्वात्सुब्लुक् ।

२६५८ । क्यचि च ७।४।३३। अस्य ईत् स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति । 'वान्तो यि प्रत्यये' ( सू. ६३ ), गव्यति । नाव्यति । 'लोपः शाकल्यस्य' ( सू. ६७ ) इति तु न, अपदान्तत्वात् । तथा हि—

२६५९ । नः क्ये १।४।१५। क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत् । सन्निपातपरिभाषया क्यचो यस्य लोपो न । गव्याञ्च-

कार। गव्यिता। नाव्याञ्चकार। नाव्यिता। नलोपः; राजीयति। 'प्रत्ययोत्तरपदयोश्च' ( सू. १३७५ ), त्वद्यति, मद्यति। 'एकार्थयोः' इत्येव, युष्मद्यति, अस्मद्यति। 'हलि च' ( सू. ३५४ ), गीर्यति, पूर्यति। 'धातोः' इत्येव। नेह–दिवमिच्छति दिव्यति। इह पुरमिच्छति 'पुर्यति' इति माधवोक्तं प्रत्युदाहरणं चिन्त्यम् , पुर्गिरोः साम्यात्। 'दीव्यति' इति दीर्घस्तु प्राचः प्रामादिक एव। अदस्यति। 'रीङृतः' (सू. १२३६ ), कर्त्रीयति 'क्त्रच्व्योश्च' ( सू. २१५९ ), गार्गीयति। वात्सीयति। 'अकृत्सार्व–' ( सू. २३९८ ) इति दीर्घः कवीयति। वाच्यति। समिध्यति।

२६६०। **क्यस्य विभाषा ६।४।५०।** हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके। 'आदेः परस्य' ( सू. ४४ ), 'अतो लोपः' ( सू० २३०८ ), तस्य स्थानिवत्त्वाल्लघूपधगुणो न, समिधिता-समिध्यिता **॥५८५ मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न॥**। किमिच्छति। इदमिच्छति। स्वरिच्छति।

२६६१। **अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ७।४।३४।** क्यजन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति। 'बुभुक्षादौ' किम् ? अशनीयति। उदकीयति। धनीयति।

२६६२। **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ७।१।५१।** एषां क्यचि असुगागमः स्यात्। **॥५८६ अश्ववृषयोर्मैथुनेच्छायाम्॥**। अश्वस्यति वडवा। वृषस्यति गौः। **॥५८७ क्षीरलवणयोर्लालसायाम्॥**। क्षीरस्यति बालः। लवणस्यत्युष्ट्रः। **॥५८८ सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ॥**। दधिस्यति-दध्यस्यति। मधुस्यति–मध्वस्यति।

२६६३। **काम्यच्च ३।१।९।** उक्तविषये काम्यच् स्यात्। पुत्रमात्मनः इच्छति पुत्रकाम्यति। इह 'यस्य हलः' (सू. २६३१) इति लोपो न, अनर्थकत्वात्। 'यस्य' इति सङ्घातग्रहणमित्युक्तम्। यशस्काम्यति। सर्पिष्काम्यति। मान्ताव्ययेभ्योऽप्ययं स्यादेव, किङ्काम्यति। स्वःकाम्यति।

२६६४। **उपमानादाचारे ३।१।१०।** उपमानात्कर्मणः सुबन्तादाचारार्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। ***५८९ अधिकरणाच्चेति वक्तव्यम्***। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे।

२६६५। **कर्तुः क्यङ् सलोपश्च ३।१।११।** उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्, सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। 'क्यङ् वा' इत्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः। ***५९० ओजसोऽप्सरसो नित्यमितरेषां विभाषया***। कृष्ण इवाचरति कृष्णायते। ओजश्शब्दो वृत्तिविषये तद्वति—ओजायते। अप्सरायते। यशायते—यशस्यते। विद्वायते—विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु युष्मद्यते, अस्मद्यते। 'क्यङ्मानिनोश्च'। (सू० ८३८), कुमारीवाचरति कुमारायते। हरिणीवाचरति हरितायते। गुर्वीव गुरूयते। सपत्नीव सपत्नायते—सपतीयते—सपत्नीयते। युवतिरिव युवायते। पट्वीमृद्व्याविव पट्वीमृदूयते। 'न कोपधायाः' ( सू० ८३९ ), पाचिकायते। ***५९१ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः***। वाग्रहणात् क्यङपि। अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते। तेन तङ्, अवगल्भते। क्लीबते।

होडते । भूतपूर्वादप्यनेकाच आम् , एतद्वार्तिकारम्भसामर्थ्यात् । न च 'अवगल्भते' इत्यादिसिद्धिस्तत्फलम , केवलानामेवाचारेऽपि वृत्तिसम्भवात् । धातूनामनेकार्थत्वात् । अवगल्भाञ्चक्रे । क्लीबाञ्चक्रे । होडाञ्चक्रे। वार्तिके 'अव' इत्युपसर्गविशिष्टपाठात्केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः। तङ् नेति तूचितम् । ॐ५९२ सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः ॐ । पूर्ववार्तिकं तु अनुबन्धासञ्जनार्थं, तत्र क्विब्नूद्यते । प्रातिपदिकग्रहणादिह 'सुपः'इति न सम्बध्यते । तेन पदकार्यं न । कृष्ण इवाचरति कृष्णति । 'अतो गुणे' ( सू० १९१ ) इति शपा सह पररूपम् । अ इवाचरति, अति । अतः । अन्ति। प्रत्ययग्रहणमपनीय 'अनेकाचः' इत्युक्तेर्नाम् । औ, अतुः, उः । द्वित्वम् , 'अतो गुणे' (सू० १९१), 'अत आदेः' (सू० २२४८) इति दीर्घः, णल, औ, वृद्धिः । अतुसादिषु तु 'आतो लोप इटि च' (सू. २३७२) इत्याल्लोपः । मालेवाचरति मालाति, लिङ्गविशिष्टपरिभाषयैकादेशस्य पूर्वान्तत्वाद्वा क्विप् । मालाञ्चकार । लङि—अमालात् । अत्र हल्ङ्यादिलोपो न, ङीसाहचर्यादापोऽपि सोरेव लोपविधानात् । इट्सकौ, अमालासीत् । कविरिव कवयति । आशीर्लिङि-कवीयात् । 'सिचि वृद्धिः—' (सू० २२९७ ) इत्यत्र 'धातोः' इत्यनुवर्त्य 'धातुरेव यो धातुः' इति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः, अकवयीत् । माधवस्तु नामधातोरपि वृद्धिमिच्छति, अकवायीत् । विरिव वयति । विवाय । विव्यतुः । अवयीत्-अवायीत् । श्रीरिव श्रयति । शिश्राय । शिश्रियतुः । पितेव पितरति । आशिषि रिङ, पित्रियात् । भूरिव भवति । अत्र 'गातिस्था—' (सू. २२२३) इति, 'भुवो वुक्—' (सू. २१७३) । इति, 'भवतेः–' (सू. २१८१) इति च न भवति, अभिव्यक्तत्वेन धा

पाठस्थस्यैव तत्र ग्रहणात्। बुभाव। अभावीत्। द्रुरिव द्रवति। 'णिश्रि—' ( सू० २३१२ ) इति चङ् न, अद्रावीत्।

२६६६। **अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५।** अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति। इदमिवाचरति इदामति। राजेव राजानति। पन्था इव पथीनति। मथीनति। ऋभुक्षीणति। द्यौरिव 'देवति' इति **माधवः**। अत्र ऊठि 'द्यवति' इत्युचितम्। क इव कति 'चकौ' इति **हरदत्तः**। माधवस्तु 'ण्यल्लोपौ' इति वचनाण्णलि वृद्धिं बाधित्वा अतो लोपात् 'चक' इति रूपमाह। स्व इव स्वति। सस्वौ-सस्व। यत्तु 'स्वामास' 'स्वाञ्चकार' इति, तदनाकरमेव।

२६६७। **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ३।१।१२।** अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्याद्धलन्तानामेषां लोपश्च। अभृशो भृशो भवति भृशायते। 'अच्वेः' इति पर्युदासबलात् 'अभूततद्भावे' इति लब्धम्। तेनेह न-क दिवा भृशा भवन्ति। ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क भवन्तीत्यर्थः। 'सुमनस्' अस्य सलोपः सुमनायते। चुरादौ 'संग्राम युद्धे' इति पठ्यते। तत्र 'संग्राम' इति प्रातिपदिकम्। तस्मात् 'तत्करोति—' इति णिच् सिद्धः। तत्सन्नियोगेनानुबन्ध आसज्यते। युद्धे योऽयं ग्रामशब्दः इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति—'**उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते**' इति। तेन मनःशब्दात्प्रागट्, स्वमनायत। उन्मनायते। उदमनायत। एवं च 'अवागल्भत' 'अवागल्भिष्ट' इत्यादावपि 'अव' इत्यस्य पृथक्करणं बोध्यम्। ज्ञापकं च सजातीयविषयम्। तेन यत्रोपसर्गस्वरूपं सक

श्रूयते न त्वादेशेनापहृतं, तत्रैव पृथक्कृतिः । एवं च 'आ ऊढः ओढः' । स इवाचर्य ओढायित्वा । अत्र 'उन्मनाय्य' 'अवगल्भ्य' इतिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठवार्तिकं तद्भाष्यं च प्रमाणम् । तथाहि— ***५९३ उस्योमाङ्क्ष्वाटः प्रतिषेधः*** । उस्योमाङोश्च परयोराटः पररूपं नेत्यर्थः । उस्रामैच्छत् औस्रीयत । औङ्कारीयत । औढीयत । 'आटश्च' ( सू० २६९ ) इति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम् ।

२६६८ । **लोहितादिडाज्भ्यः क्यष् ३।१।१३** । लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् ।

२६६९ । **वा क्यषः १।३।९०** । क्यषन्तात्परस्मैपदं वा स्यात् । लोहितायति—लोहितायते । अत्र अच्वेः' इत्यनुवृत्त्या अभूततद्भावविषयत्वं लब्धम् । तच्च लोहितशब्दस्यैव विशेषणम् , न तु ड्वाचोऽसम्भवात् । नाप्यादिशब्दग्राह्याणाम् , तस्य प्रत्याख्यानात् । तथा च वार्तिकं–***५९४ लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि*** इति । न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत, उच्चारणसामर्थ्यादिति वाच्यम् , तस्यापि भाष्ये प्रत्याख्यानात् । पटपटायति–पटपटायते । कृभ्वस्तियोगं विनापीह डाच् , डाजन्तात्क्यषो विधानसामर्थ्यात् । यत्तु—

**'लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।**
**मूर्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी ॥'**

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति, तद्भाष्यवार्तिकविरुद्धम् । तस्मात्तेभ्यः क्यङेव, श्यामायते । दुःखादयो वृत्तिविषये तद्वति वर्तन्ते । लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि क्यषे,

लोहिनीयति-लोहिनीयते ।

२६७० । **कष्टाय क्रमणे ३।१।१४** । चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहते इत्यर्थः । ॐ५९५ **सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्** ॐ । कण्वं पापम् । सत्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् । पापं 'चिकीर्षति' इत्यस्वपदविग्रहः । सत्रायते । कक्षायते । इत्यादि ।

२६७१ । **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५** । रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते । ॐ५९६ **हनुचलने इति वक्तव्यम्** ॐ । चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थः । नेह—कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निस्सृतं द्रव्यमिह रोमन्थः । तदश्नातीत्यर्थ इति **कैयटः** । वर्तुलं करोतीत्यर्थ इति **न्यासकारहरदत्तौ** । ॐ५९७ **तपसः परस्मैपदं च** ॐ । तपश्चरति तपस्यति ।

२६७२ । **बाष्पोष्मभ्यामुद्वमने ३।१।१६** । आभ्यां कर्मभ्यां क्यङ् स्यात् । बाष्पमुद्वमति बाष्पायते । ऊष्मायते ॐ५९८ **फेनाच्चेति वाच्यम्** ॐ । फेनायते ।

२६७३ । **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३।१।१७** । एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । पक्षे 'तत्करोति—' इति णिजपीष्यत इति न्यासः । शब्दयति । ॐ५९९ **सुदिनदुर्दिननीहारेभ्यश्च** ॐ । सुदिनायते ।

२६७४ । **सुखादिभ्यः कर्तृवेदनायाम् ३।१।१८** । एभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः ।

सुखं वेदयते सुखायते । 'कर्तृग्रहणं' किम् ? परस्य सुखं वेदयते ।

२६७५ । नमोवरिवश्चित्रङः क्यच् ३।१।१९ । 'करणे' इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये च । नमस्यति देवान् । पूजयतीत्यर्थः वरिवस्यति गुरून् । शुश्रूषते इत्यर्थः । चित्रीयते । विस्मयते इत्यर्थः । विस्मापयते इत्यन्ये ।

२६७६ । पुच्छभाण्डचीवराण्णिङ् ३।१।२० । ॐ६०० पुच्छादुदसने व्यसने पर्यसने च ॐ । विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते परिपुच्छयते । ॐ६०१ भाण्डात्समाचयने ॐ । संभाण्डयते । भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः । समबभाण्डत । ॐ६०२ चीवरादर्जने परिधाने च ॐ । सञ्ची वरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः ।

२६७७। मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ३।१।२१। कृञर्थे । मुण्डं करोति मुण्डयति । ॐ६०३ व्रताद्भोजनतन्निवृत्त्योः ॐ। पयः शूद्रान्नं वा व्रतयति । *६०४ वस्त्रात्समाच्छादने* । संवस्त्रयति । ॐ६०५ हलयादिभ्यो ग्रहणे ॐ । हलिकल्योरदन्तत्वं च निपात्यते । हलिं कलिं वा गृह्णाति हलयति, कलयति । महद्धलं हलिः । परत्वात् वृद्धौ सत्यामपीष्ठवद्भावेन अगेन लुप्यते, अतः सन्वद्भावदीर्घौ न-अजहलत् । अचकलत् । कृतं गृह्णाति कृतयति । तूस्तानि विहन्ति वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । मुण्डादयः सत्यापपाश—' ( सू० २५६३ ) इत्यत्रैव पठितुं युक्ताः । 'प्रातिपदिकाद्धात्वर्थे—' इत्येव सिद्धे केषांचिद् ग्रहणं सापेक्षेभ्योऽपि णिजर्थम् । मुण्डयति माणवकन् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनम्–इति । हलिकल्योरदन्तत्वार्थम् ।

सत्यस्यापुगर्थम्। केषांचित्तु प्रपञ्चार्थम्। सत्यं करोत्याचष्टे वा सत्यापयति ॐ६०६ अर्थवेदयोरप्यापुग्वक्तव्यः ॐ। अर्थापयति। वेदापयति। पाशं विमुञ्चति विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकुष्णात्यनुतूलयति। तृणाग्रं तूलेनानुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाऽभियाति अभिषेणयति। 'उपसर्गात्सुनोति—' (सू० २२७०) इति षः, अभ्यषेणयत। 'प्राक्सितात्-' ( सू. २२७६ ) इति षः। अभिषिषेणयिषति। 'स्थादिष्वभ्यासेन च—' ( सू० २२७७ ) इति षः, लोमान्यनुमार्ष्टि अनुलोमयति। 'त्वच संवरणे' घः, त्वचं गृह्णाति त्वचयति। वर्मणा संनह्यति संवर्मयति। वर्णं गृह्णाति वर्णयति। चूर्णैरवध्वंसते अवचूर्णयति। 'इष्ठवत्' इत्यतिदेशात् पुवद्भावादयः, एनीमाचष्टे एतयति। दरदमाचष्टे दारयति। पृथुं प्रथयति। वृद्धौ सत्यां पूर्वं वा टिलोपः, अपिप्रथत्-अपप्रथत्। मृदुं म्रदयति। अमम्रदत्-अमिम्रदत्। भृशं, कृशं, दृढं, परिवृढम्। भ्रशयति। क्रशयति। द्रढयति। अबभ्रशत्। अचक्रशत्। अदद्रढत्। परिव्रढयति। पर्यवव्रढत्। ऊढिमाख्यत् औजिढत्। ढत्वादीनामसिद्धत्वात् हृतिशब्दस्य द्वित्वम्, 'पूर्वत्रासिद्धीयमद्वित्वे' ( प० १२८ ) इति त्वनित्यमित्युक्तम्। ढिशब्दस्य द्वित्वमित्यन्ये, औडिढत्। ऊढमाख्यत् औजढत्-औडढत्। 'ओः पुयण्जि'-( सू० २५७७ ) इति सूत्रे वर्गप्रत्याहारजग्रहो लिङ्गं 'द्वित्वे कार्ये णावच आदेशो न' इति ज्ञापयतावुक्तम्। 'प्रकृत्यैकाच्' ( सू० २०१० ), वृद्धिपुकौ, स्वापयति। त्वां मां वा आचष्टे त्वापयति, मापयति-मपर्यन्तस्य त्वमौ। पररूपात्पूर्वं नित्यत्वाट्टिलोपः, वृद्धिः, पुक्। त्वादयति, मादयति इति तु न्याय्यम्, अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैकाच्' ( सू० २०१० ) इति प्रकृतिभावात्।

न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम् . भाष्यस्य प्रेष्ठा-
युदाहरणविशेषेऽन्यथासिद्धिपरत्वात् । युवामावां वा युष्मयति, अस्म-
यति । श्वानमाचष्टे शावयति, 'नस्तद्धिते' (सू० ६८०) इति टिलोपः ।
प्रकृतिभावस्तु न, 'येन नाप्राप्ति' (प० ५९) न्यायेन 'टेः' (सू० १७८६)
इत्यस्यैव बाधको हि सः । भत्वात्सम्प्रसारणम् । अन्ये तु 'नस्तद्धिते'
( सू० ६८० ) इति नेहातिदिश्यते, इष्ठनि तस्यादृष्टत्वात् । 'ब्रह्मिष्ठः'
इत्यादौ परत्वात् 'टेः' ( सू० १७८६ ) इत्यस्यैव प्रवृत्तेः । तेन 'शुन
यति' इति रूपमाहुः विद्वांसमाचष्टे विद्वयति । 'अङ्गवृत्तपरिभाषया
सम्प्रसारणं ने'त्येके । सम्प्रसारणे वृद्धावावादेशे च 'विदावयति'
इत्यन्ये । नित्यत्वाट्टिलोपात्प्राक्सम्प्रसारणम्, अन्तरङ्गत्वात्पूर्वरूपम्,
टिलोपः, 'विदयति' इत्यपरे । उदञ्चमाचष्टे उदीचयति । उदैचिचत् ।
प्रत्यञ्चं प्रतीचयति प्रत्यचिचत् । 'इकोऽसवर्णे' ( सू० ९ ) इति
प्रकृतिभावपक्षे, प्रतिअचिचत् । सम्यञ्चमाचष्टे समीचयति । सम्यचि-
चत्–समिअचिचत् । तिर्यञ्चमाचष्टे तिराययति । अञ्चे ष्टिलोपेनापहारेऽपि
बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः । 'असिद्धवदत्र–' ( सू० २१८३ )
इति चिणो लुङ् न्यायेन प्रथमटिलोपोऽसिद्धः, अतः पुनष्टिलोपो न, अङ्ग-
वृत्तपरिभाषया वा । चङ्यग्लोपित्वादुपधाह्रस्वो न, अतितिरायत् ।
सध्र्यञ्चमाचष्टे सध्राययति । अससध्रायत् । विष्वद्र्यञ्चम् अविविष्व-
द्रायत् । देवद्र्यञ्चम्–देवद्रायति । अदिदेवद्रायत् । अदद्र्यञ्चम्–अद-
द्राययति । आददद्रायत् । अदमुयञ्चम्–अदमुआययति । आद-
दमुआयत् । अमुमुयञ्चम्–अमुमुआययति । चङ्, आमुमुआयत् ।
भुवं–भावयति । अबीभवत् । भ्रुवम्–अबुभ्रवत् । श्रियम्–अशि-
श्रयत् । गाम्–अजूगवत् । रायम्–अरीरयत् । नावम्–अनूनवत् ।
स्वश्वं–स्वाशश्वत् । स्वः, अव्ययानां भमात्रेटिलोपः । स्वयति ।

